श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीरामचंद्राय नमः ॥
ततोरावणनीतायाःसीतायाःशत्रुकर्षणः ॥ इयेषपदमन्वेष्टुंचारणाचरितेपथि ॥ १ ॥
दुष्करंनिष्प्रतिद्वंद्वंचिकीर्षन्कर्मवानरः ॥ समुदग्रशिरोग्रीवोगवांपतिरिवाबभौ ॥ २ ॥
अथवैदूर्यवर्णेषुशाद्वलेषुमहाबलः ॥ धीरःसलिलकल्पेषुविचचारयथासुखम् ॥ ३ ॥
द्विजान्वित्रासयन्धीमानुरसापादपान्हरन् ॥ मृगांश्चसुबहून्निघ्नन्प्रवृद्धइवकेसरी ॥ ४ ॥
नीललोहितमांजिष्ठपद्मवर्णैःसितासितैः ॥ स्वभावविहितैश्चित्रैर्धातुभिःसमलंकृतम्
॥ ५ ॥ कामरूपिभिराविष्टमभीक्ष्णंसपरिच्छदैः ॥ यक्षकिन्नरगंधर्वैर्देवकल्पैश्च
पन्नगैः ॥ ६ ॥ ससस्यगिरिवर्यस्यतलेनागवरायुते ॥ तिष्ठन्कपिवरस्तत्रह्रदेनागइवा
बभौ ॥ ७ ॥ ससूर्यायमहेंद्रायपवनायस्वयंभुवे ॥ भूतेभ्यश्चांजलिंकृत्वाचकारगम
नेमतिम् ॥ ८ ॥ अंजलिंप्राङ्मुखःकृत्वापवनायात्मयोनये ॥ ततोभिववृधेगंतुंदक्षिणो
दक्षिणांदिशम् ॥ ९ ॥ प्लवंगप्रवरैर्दृष्टःप्लवनेकृतनिश्चयः ॥ ववृधेरामवृद्ध्यर्थंसमुद्रइव
पर्वसु ॥ १० ॥ निष्प्रमाणशरीरःसँल्लिलंघयिषुरर्णवम् ॥ बाहुभ्यांपीडयामासचरणाभ्यां



चपर्वतम्॥ ११॥सचचालाचलश्चारुर्मुहूर्तंकपिपीडितः ॥ तरूणांपुष्पिताग्राणांसर्वंपुष्पमशातयत् ॥ १२॥ तेनपादपमुक्तेनपुष्पौघेणसुगंधिना ॥ सर्वतःसंवृतःशैलोबभौपुष्पमयोयथा ॥ १३ ॥ तेनचोत्तमवीर्येणपीडचमानःसपर्वतः ॥ सलिलंसंप्रसुस्रावमदंमत्तइवद्विपः॥ १४ ॥ पीडचमानस्तुबलिनामहेंद्रस्तेनपर्वतः ॥ रीतीर्निर्वर्तयामासकांचनांजनराजतीः ॥ १५ ॥ मुमोचचशिलाःशैलोविशालाःसमनःशिलाः ॥ मध्यमेनार्चिषाजुष्टोधूमराजीरिवानलः ॥१६॥ हरिणापीडचमानेनपीडचमानानिसर्वतः॥ गुहाविष्टानिसत्त्वानिविनेदुर्विकृतैःस्वरैः ॥ १७ ॥ समहान्तसत्त्वसन्नादःशैलपीडानिमित्तजः ॥ पृथिवींपूरयामासदिशश्चोपवनानिच ॥ १८ ॥ शिरोभिःपृथुभिर्नागाव्यक्तस्वस्तिकलक्षणैः ॥ वमंतःपावकंघोरंददंशुर्दशनैःशिलाः ॥ १९ ॥ तास्तदासविषैर्दष्टाःकुपितैस्तैर्महाशिलाः ॥ जज्वलुःपावकोद्दीप्ताबिभिदुश्चसहस्रधा ॥ २० ॥ यानित्वौषधजालानितस्मिञ्जातानिपर्वते ॥ विषघ्नान्यपिनागानांनशेकुःशमितुंविषम् ॥ २१ ॥ भिद्यतेयंगिरिर्भूतैरितिमत्वातपस्विनः ॥ त्रस्ताविद्याधरास्तस्मादुत्पेतुः

स्त्रीगणैःसह ॥ २२ ॥ पानभूमिगतंहित्वा हैममासनभाजनम् ॥ पात्राणिचमहार्हाणि करकांश्चहिरण्मयान् ॥ २३ ॥ लेह्यानुच्चावचान्भक्ष्यान्मांसानिविविधानिच ॥ आ र्षभाणिचचर्माणिखड्गांश्चकनकत्सरून् ॥ २४ ॥ कृतकंठगुणाःक्षीबारक्तमाल्यानु लेपनाः ॥ रक्ताक्षाःपुष्कराक्षाश्चगगनंप्रतिपेदिरे ॥ २५ ॥ हारनूपुरकेयूरपारिहार्यधराः स्त्रियः ॥ विस्मिताःसस्मितास्तस्थुराकाशेरमणैः सह ॥ २६ ॥ दर्शयंतोमहाविद्याविद्याधरमहर्षयः ॥ विस्मितास्तस्थुराकाशेवीक्षांचक्रुश्चपर्वतम् ॥ २७ ॥ शुश्रुवुश्चतदा शब्दमृषीणांभावितात्मनाम् ॥ चारणानांचसिद्धानांस्थितानांविमलेऽबरे ॥ २८ ॥ एषपर्वतसंकाशोहनुमान्मारुतात्मजः ॥ तितीर्षतिमहावेगःसमुद्रंवरुणालयम् ॥ २९ ॥ रामार्थंवानरार्थंचचिकीर्षन्कर्मदुष्करम् ॥ समुद्रस्यपरंपारंदुष्प्रापंप्राप्तुमिच्छति ॥ ३० ॥ इतिविद्याधरावाचःश्रुत्वातेषांतपस्विनाम् ॥ तमप्रमेयंददृशुःपर्वतेवानरर्षभम् ॥ ३१ ॥ दुधुवेचसरोमाणिचकंपेचाचलोपमः ॥ ननादचमहानादंसुमहानिव तोयदः ॥ ३२ ॥ आनुपूर्व्येणवृत्तंचलांगूलंलोमभिश्चितम् ॥ उत्पतिष्यन्विचिक्षेपपक्षिराजइवोरगम् ॥

॥ ३३ ॥ तस्यलांगूलमाविद्धमतिवेगस्यपृष्ठतः ॥ ददृशेगरुडेनेवह्नियमाणोमहोरगः ॥ ३४ ॥ बाहूसंस्तंभयामासमहापरिघसन्निभौ ॥ आससादकपिःकट्यांचरणौसंचुकोचच ॥ ३५ ॥ संहृत्यचभुजौश्रीमांस्तथैवचशिरोधराम् ॥ तेजःसत्त्वंतथावीर्यमाविवेशसवीर्यवान् ॥ ३६ ॥ मार्गमालोकयन्दूरादूर्ध्वंप्रणिहितेक्षणः ॥ रुरोधहृदयेप्राणानाकाशमवलोकयन् ॥ ३७ ॥ पद्भ्यांदृढमवस्थानंकृत्वासकपिकुंजरः ॥ निकुंच्यकर्णौहनुमानुत्पतिष्यन्महाबलः ॥ ३८ ॥ वानरान्वानरश्रेष्ठइदंवचनमब्रवीत् ॥ यथाराघवनिर्मुक्तःशरःश्वसनविक्रमः ॥ ३९ ॥ गच्छेत्तद्वद्गमिष्यामिलंकांरावणपालिताम् ॥ नहिद्रक्ष्यामियदितांलंकायांजनकात्मजाम् ॥ ४० ॥ अनेनैववहिवेगेनगमिष्यामिसुरालयम् ॥ यदिवात्रिदिवेसीतांनद्रक्ष्यामिकृतश्रमः ॥ ४१ ॥ बद्ध्वाराक्षसराजानमानयिष्यामिरावणम् ॥ सर्वथाकृतकार्योऽहमेष्यामिसहसीतया ॥ ४२ ॥ आनयिष्यामिवालंकांसमुत्पाट्यसरावणाम् ॥ एवमुक्त्वातुहनुमान्वानरान्वानरर्षभः ॥ ४३ ॥ उत्पपाताथवेगेनवेगवानविचारयन् ॥ सुपर्णमिवचात्मानंमेनेसकपिकुंजरः ॥ ४४ ॥

समुत्पतंतितस्मिंस्तुवेगात्तेनगरोहिणः ॥ संहृत्यविटपान्सर्वान्समुत्पेतुःसमंततः ॥ ॥४५॥समत्तकोयष्टिभकान्पादपान्पुष्पशालिनः ॥ उद्वहन्नुरुवेगेनजगामविमलेऽबरे ॥ ॥४६॥उरुवेगोत्थितावृक्षामुहूर्तंकपिमन्वयुः ॥ प्रस्थितंदीर्घमध्वानंस्वबंधुमिवबांधवाः ॥ ४७ ॥ तमूरुवेगोन्मथिताःसालाश्चान्येनगोत्तमाः ॥ अनुजग्मुर्हनूमंतंसैन्याइवम हीपतिम् ॥ ४८ ॥ सुपुष्पिताग्रैर्बहुभिःपादपैरन्वितःकपिः ॥ हनूमान्पर्वताकारोबभूवा द्भुतदर्शनः ॥ ४९ ॥ सारवंतोऽथयेवृक्षान्यमज्जँल्लवणांभसि ॥ भयादिवमहेन्द्रस्यपर्व तावरुणालये ॥ ५० ॥ सनानाकुसुमैःकीर्णःकपिःसांकुरकोरकैः ॥ शुशुभेमेघसंकाशः खद्योतैरिवपर्वतः ॥ ५१ ॥ विमुक्तास्तस्यवेगेनमुक्त्वापुष्पाणितेद्रुमाः ॥ व्यवशीर्यंत सलिलेनिवृत्ताःसुहृदोयथा ॥ ५२ ॥ लघुत्वेनोपपन्नंतद्विचित्रंसागरेऽपतत् ॥ द्रुमाणां विविधंपुष्पंकपिवायुसमीरितम् ॥ ५३ ॥ ताराशतमिवाकाशंप्रबभौचमहार्णवः ॥ पु ष्पौघेणानुबद्धेननानावर्णेनवानरः ॥ ५४ ॥ बभौमेघइवाकाशेविद्युद्गणविभूषितः ॥

१ उद्यन्वै इति पाठः ।

तस्यवेगसमुद्भूतैःपुष्पैस्तोयमदृश्यत॥५५॥ताराभिरभिरामाभिरुदिताभिरिवाबरम्॥
तस्यांबरगतौबाहूददृशातेप्रसारितौ ॥ ५६ ॥ पर्वताग्राद्विनिष्क्रांतौपंचास्याविवपन्न
गौ॥पिबन्निवबभौश्रीमान्त्सोर्मिमालंमहार्णवम् ॥ ५७ ॥ पिपासुरिवचाकाशंददृशेस
महाकपिः ॥ तस्यविद्युत्प्रभाकारेवायुमार्गानुसारिणः ॥ ५८ ॥ नयनेविप्रकाशेतेपर्व
तस्थाविवानलौ ॥ पिंगेपिंगाक्षमुख्यस्यबृहतीपरिमंडले ॥५९॥ चक्षुषीसंप्रकाशेतेचंद्र
सूर्याविवस्थितौ॥ मुखंनासिकयातस्यताम्रयाताम्रमाबभौ ॥६०॥ संध्ययासमभिस्पृष्टं
यथासूर्यस्यमंडलम् ॥ लांगूलंचसमाविद्धंप्लवमानस्य शोभते ॥ ६१ ॥ अंबरेवायुपुत्र
स्यशक्रध्वजइवोच्छ्रितः ॥ लांगूलचक्रेणमहाञ्छुक्लदंष्ट्रोनिलात्मजः ॥६२॥ व्यरोच
तमहाप्राज्ञःपरिवेषीवभास्करः ॥ स्फिग्देशेनाभिताम्रेणरराजसमहाकपिः ॥ ६३ ॥
महतादारितेनेवगिरिर्गैरिकधातुना ॥ तस्यवानरसिंहस्यप्लवमानस्यसागरम् ॥ ६४ ॥
कक्षांतरगतोवायुर्जीमूतइवगर्जति ॥ खेयथानिपतत्युल्काउत्तरांताद्विनिःसृता ॥ ६५ ॥
दृश्यतेसानुबंधाचतथासकपिकुंजरः ॥ पततपतंगसंकाशोव्यायतःशुशुभेकपिः ॥६६॥

प्रवृद्धइवमातंगःकक्षयाबध्यमानया ॥ उपरिष्टाच्छरीरेणछाययाचावगाढया ॥ ६७ ॥ सागरेमारुताविष्टानौरिवासीत्तदाकपिः ॥ यंयंदेशंसमुद्रस्यजगामसमहाकपिः ॥ ॥ ६८ ॥ सतुतस्यांगवेगेनसोन्मादइवलक्ष्यते ॥ सागरस्योर्मिजालानिउरसाशैलवर्ष्मणा ॥ ६९ ॥ अभिघ्नंस्तुमहावेगःपुप्लुवेसमहाकपिः ॥ कपिवातश्चबलवान्मेघवातश्चनिर्गतः ॥ ७० ॥ सागरंभीमनिर्ह्रादंकंपयामासतुर्भृशम् ॥ विकर्षन्नूर्मिजालानिबृहंतिलवणांभसि ॥ ७१ ॥ पुप्लुवेकपिशार्दूलोविकिरन्निवरोदसी ॥ मेरुमंदरसंकाशानुद्गतान्समहार्णवे ॥७२॥ अत्यक्रामन्महावेगस्तरंगान्गणयन्निव ॥ तस्यवेगसमुद्घृष्टंजलंसजलदंतदा ॥ ७३ ॥ अंबरस्थंविबभ्राजेशारदाभ्रमिवाततम् ॥ तिमिनक्रझषाःकूर्मादृश्यंतेविवृतास्तदा ॥ ७४ ॥ वस्त्रापकर्षणेनेवशरीराणिशरीरिणाम् ॥ क्रममाणंसमीक्ष्याथभुजगाःसागरालयाः ॥ ७५ ॥ व्योम्नितंकपिशार्दूलंसुपर्णमिवमेनिरे ॥ दशयोजनविस्तीर्णात्रिंशद्योजनमायता ॥ ७६ ॥ छायावानरसिंहस्यजवेचारुतराभवत् ॥ श्वेताभ्रघनराजीववायुपुत्रानुगामिनी ॥ ७७ ॥ तस्यसाशुशुभेछायापतितालवणांभसि ॥

शुशुभेसमहातेजामहाकायोमहाकपिः ॥ ७८ ॥ वायुमार्गेनिरालंबेपक्षवानिवपर्वतः ॥ येनासौयातिबलवान्वेगेनकपिकुंजरः ॥ ७९ ॥ तेनमार्गेणसहसाद्रोणीकृतइवार्णवः ॥ आपातेपक्षिसंघानांपक्षिराजइवव्रजन् ॥ ८० ॥ हनूमान्मेघजालानि प्रकर्षन्मारुतोयथा ॥ प्रविशन्नभ्रजालानिनिष्पतंश्चपुनःपुनः ॥ ८१ ॥ प्रच्छन्नश्चप्रकाशश्चचंद्रमाइवलक्ष्यते ॥ पांडुरारुणवर्णानिनीलमांजिष्ठकानि च ॥ ८२ ॥ कपिनाकृष्यमाणानिमहाभ्राणिचकाशिरे ॥ प्लवमानंतुतंदृष्ट्वाप्लवगंत्वरितंतदा ॥ ८३ ॥ ववृषुस्तत्रपुष्पाणिदेवगंधर्वदानवाः ॥ ततापनहितंसूर्यःप्लवंतंवानरेश्वरम् ॥ ८४ ॥ सिषेवेचतदावायूरामकार्यार्थसिद्धये ॥ ऋषयस्तुष्टुवुश्चैनंप्लवमानंविहायसा ॥ ८५॥ जगुश्चदेवगंधर्वाःप्रशंसंतोवनौकसम् ॥ नागाश्चतुष्टुवुर्यक्षारक्षांसिविबुधाःखगाः ॥ ८६ ॥ प्रेक्ष्यसर्वेकपिवरंसहसाविगतक्लमम् ॥ तस्मिन्प्लवगशार्दूलेप्लवमानेहनूमति ॥ ८७ ॥ इक्ष्वाकुकुलमानार्थीचिंतयामाससागरः ॥ साहाय्यंवानरेंद्रस्ययदिनाहंहनूमतः ॥ ८८ ॥ करिष्यामिभविष्यामिसर्ववाच्योविवक्षताम् ॥ अहमिक्ष्वाकुनाथेनसागरेण विवर्धितः ॥ ८९ ॥

इक्ष्वाकुसचिवश्चायंतन्नार्हत्यवसादितुम् ॥ तथामयाविधातव्यंविश्रमेतयथाकपिः ॥
॥ ९० ॥ शेषं च मयि विश्रांतः सुखेनातितरिष्यति ॥ इतिकृत्वामतिंसाध्वींसमुद्रश्छ
न्नमंभसि ॥ ९१ ॥ हिरण्यनाभंमैनाकमुवाचगिरिसंत्तमम् ॥ त्वमिहासुरसंघानांपाताल
तलवासिनाम् ॥ ९२ ॥ देवराज्ञागिरिश्रेष्ठपरिघःसन्निवेशितः ॥ त्वमेषाज्ञातवीर्याणांपुन
रेवोत्पतिष्यताम् ॥ ९३ ॥ पातालस्याप्रमेयस्यद्वारमावृत्यतिष्ठसि ॥ तिर्यगूर्ध्वमधश्चैव
शक्तिस्तेशैलवर्धितुम् ॥ ९४ ॥ तस्मात्संचोदयामित्वामुत्तिष्ठगिरिसत्तम ॥ सएषकपि
शार्दूलस्त्वामुपर्यैतिवीर्यवान् ॥ ९५ ॥ हनूमान्नामकार्यार्थीभीमकर्माखमाप्लुतः ॥ अस्य
साह्यंमयाकार्यमिक्ष्वाकुकुलवर्तिनः ॥ ९६ ॥ ममहीक्ष्वाकवःपूज्याःपरंपूज्यतमास्तव ॥
कुरुसाचिव्यमस्माकंननःकार्यमतिक्रमेत् ॥ ९७ ॥ कर्तव्यमकृतंकार्यंसतांमन्यु
मुदीरयेत् ॥ सलिलादूर्ध्वमुत्तिष्ठतिष्ठत्वेषकपिस्त्वयि ॥ ९८ ॥ अस्माकमतिथिश्चैव
पूज्यश्चप्लवतांवरः ॥ चामीकरमहानाभदेवगंधर्वसेवित ॥ ९९ ॥ हनूमांस्त्वयिविश्रां

---

१ अत्र 'खमाप्लुत' इत्यनन्तरं केचिच्छ्लोकाः प्रक्षिप्ताः परैरिति कतकः ।





तस्ततःशेषंगमिष्यति ॥ सएषकपिशार्दूलस्त्वामुपैष्यति वीर्यवान् ॥१००॥ काकुत्स्थस्यानृशंस्यंचमैथिल्याश्चविवासनम् ॥ श्रमंचप्लवगेंद्रस्यसमीक्ष्योत्थातुमर्हसि ॥ १ ॥ हिरण्यगर्भोमैनाकोनिशम्यलवणांभसः ॥ उत्पपातजलात्तूर्णंमहाद्रुमलतावृतः ॥ २ ॥ स सागरजलंभित्त्वाबभुवात्यूच्छ्रितस्तदा ॥ यथाजलधरंभित्त्वादीप्तरश्मिर्दिवाकरः ॥ ३ ॥ समहात्मामुहूर्तेनपर्वतःसलिलावृतः ॥ दर्शयामासशृंगाणिसागरेणनियोजितः ॥४॥ शातकुंभमयैःशृंगैःसकिन्नरमहोरगैः ॥ आदित्योदयसंकाशैरुल्लिखद्भिरिवांबरम् ॥ ५ ॥ तस्यजांबूनदैःशृंगैःपर्वतस्यसमुत्थितैः ॥ आकाशंशस्त्रसंकाशमभवत्कांचनप्रभम् ॥ ६ ॥ जातरूपमयैःशृंगैर्भ्राजमानैर्महाप्रभैः ॥ आदित्योदयसंकाशःसोभवद्गिरिसत्तमः ॥ ७ ॥ समुत्थितमसंगेनहनुमानग्रतःस्थितम् ॥ मध्येलवणतोयस्यविघ्नोऽयमितिनिश्चितः॥ ८॥ सतमुच्छ्रितमत्यर्थंमहावेगोमहाकपिः ॥ उरसापातयामासजीमूतमिवमारुतः ॥ ९ ॥ सतदापातितस्तेनकपिनापर्वतोत्तमः ॥ बुद्धातस्य



१ अत्रापि द्वित्रश्लोकप्रक्षेपः इति रामाभिरामीये । ते श्लोकाः आदर्शपुस्तकेषु नोपलभ्यन्ते । २ सादितः इति पाठः ।

हरेर्वेगंजहर्षचननादच ॥ ११० ॥ तमाकाशगतंवीरमाकाशेसमुपस्थितः ॥ प्रीतो
हृष्टमनावाक्यमब्रवीत्पर्वतःकपिम् ॥ ११ ॥ मानुषंधारयन्रूपमात्मनःशिखरेस्थितः ॥
दुष्करंकृतवान्कर्मत्वमिदंवानरोत्तम ॥ १२ ॥ निपत्यममशृंगेषुसुखंविश्रम्यगम्यता
म् ॥ राघवस्यकुलेजातैरुदधिःपरिवर्धितः ॥ १३ ॥ सत्वांरामहितेयुक्तंप्रत्यर्चयतिसा
गरः ॥ कृतेचप्रतिकर्तव्यमेषधर्मःसनातनः ॥ १४ ॥ सोऽयंतत्प्रतिकारार्थीत्वत्तःसम्मान
मर्हति ॥ तिष्ठत्वंहरिशार्दूलमयिविश्रम्यगम्यताम् ॥ १५ ॥ त्वन्निमित्तमनेनाहंबहुमा
नात्प्रचोदितः ॥ योजनानांशतंचापिकपिरेषखमाप्लुतः ॥ १६ ॥ तवसानुषुविश्रांतः
शेषंप्रक्रमतामिति ॥ तदिदंगंधवत्स्वादुकंदमूलफलंबहु ॥ १७ ॥ तदास्वाद्य हरिश्रेष्ठ
विश्रांतोऽनुगमिष्यसि ॥ अस्माकमपिसंबंधःकपिमुख्यत्वयास्तिवै ॥ १८ ॥ प्रख्यात
स्त्रिषुलोकेषुमहागुणपरिग्रहः ॥ वेगवंतःप्लवंतोयेप्लवगामारुतात्मज ॥ १९ ॥ तेषां
मुख्यतमंमन्येत्वामहंकपिकुंजर ॥ अतिथिःकिलपूजार्हःप्राकृतोपिविजानता ॥ १२० ॥

१ सगरपुत्रैरित्यर्थः । २ उपकारे इत्यर्थः । ३ इदमर्धं प्रक्षिप्तमितिकेचित् । ४ किं पुनर्भवादृशो महापराक्रमीतिकाकुध्वनिः ।

धर्मजिज्ञासमानेनकिंपुनस्त्वादृशोमहान् ॥ त्वंहिदेववरिष्ठस्यमारुतस्यमहात्मनः ॥ २१ ॥ पुत्रस्तस्यैववेगेनसदृशःकपिकुंजर ॥ पूजितेत्वयिधर्मज्ञेपूजांप्राप्नोति मारुतः ॥ २२ ॥ तस्मात्त्वंपूजनीयोमेशृणुचाप्यत्रकारणम् ॥ पूर्वंकृतयुगेतातपर्वताः पक्षिणोऽभवन् ॥ २३ ॥ तेऽपिजग्मुर्दिशःसर्वागरुडानिलवेगिनः ॥ ततस्तेषुप्रयातेषु देवसंघःसहर्षिभिः ॥ २४ ॥ भूतानिचभयंजग्मुस्तेषांपतनशंकया ॥ ततःक्रुद्धः सहस्राक्षःपर्वतानांशतक्रतुः ॥ २५ ॥ पक्षांश्चिच्छेदवज्रेणततःशतसहस्रशः ॥ समा मुपगतःक्रुद्धोवज्रमुद्यम्यदेवराट् ॥ २६ ॥ ततोहंसहसाक्षिप्तःश्वसनेनमहात्मना ॥ अस्मिँल्लवणतोयेचप्रक्षिप्तःप्लवगोत्तम ॥ २७ ॥ गुप्तपक्षःसमग्रश्चतवपित्राभिरक्षितः ॥ ततोहंमानयामित्वांमान्योहिममभारुतः ॥ २८ ॥ त्वयाममैषसंबंधःकपिमुख्य महागुण ॥ अस्मिन्नेवंगतेकार्येसागरस्यममैवच ॥ २९ ॥ प्रीतिंप्रीतमनाःकर्तुंत्व मर्हसिमहामते ॥ श्रमंमोक्षयपूजांचगृहाणहरिसत्तम ॥ १३० ॥ प्रीतिंचममभान्य स्वप्रीतोस्मि तवदर्शनात् ॥ एवमुक्तःकपिश्रेष्ठस्तंनगोत्तममब्रवीत् ॥ ३१ ॥ प्रीतोऽस्मि

कृतमातिथ्यंमन्युरेषोऽपनीयताम् ॥ त्वरतेकार्यकालोमेअहश्चाप्यतिवर्त्तते ॥ ३२ ॥
प्रतिज्ञाचमयादत्तानस्थातव्यमिहान्तरे ॥ इत्युक्त्वापाणिनाशैलमालम्भ्यहरिपुंगवः॥
॥ ३३ ॥ जगामाकाशमाविश्यवीर्यवान्प्रहसन्निव ॥ सपर्वतसमुद्राभ्यांबहुमानादवे
क्षितः॥ ३४ ॥ पूजितश्चोपपन्नाभिराशीर्भिरभिनंदितः ॥ अथोर्ध्वंदूरमाप्लुत्यहित्वाशैल
महार्णवौ ॥ ३५ ॥ पितुःपंथानमासाद्यजगामविमलेंऽबरे ॥ भूयश्चोर्ध्वगतिंप्राप्यगिरिं
तमवलोकयन् ॥ ३६ ॥ वायुसूनुर्निरालंबेजगामविमलेंऽबरे ॥ तद्द्वितीयंहनुमतोदृष्ट्वा
कर्मसुदुष्करम् ॥ ३७ ॥ प्रशशंसुःसुराःसर्वेसिद्धाश्चपरमर्षयः ॥ देवताश्चाभवन्हृष्टा
स्तत्रस्थास्तस्यकर्मणा ॥ ३८ ॥ कांचनस्यसुनाभस्यसहस्राक्षश्च वासवः ॥ उवाच
वचनं धीमान्परितोषात्सगद्गदम् ॥ ३९ ॥ सुनाभंपर्वतश्रेष्ठंस्वयमेव शचीपतिः॥ हिरण्य
नाभशैलेंद्रपरितुष्टोस्मितेभृशम् ॥ १४० ॥ अभयंतेप्रयच्छामिगच्छसौम्ययथासुख
म्॥साह्यंकृतंतेसुमहद्विक्रांतस्यहनूमतः ॥ ४१ ॥ क्रमतो योजनशतं निर्भयस्य भयेस
ति ॥ रामस्यैषहितायैवयातिदाशरथेःकपिः ॥ ४२ ॥ सत्क्रियांकुर्वताशक्त्यातोषितो

स्मिन्दृढंत्वया ॥ ततःप्रहर्षमलभद्विपुलंपर्वतोत्तमः ॥ ४३ ॥ देवतानांपतिंदृष्ट्वापरितुष्टं शतक्रतुम् ॥ सवैदत्तवरःशैलोबभूवावस्थितस्तदा ॥ ४४ ॥ हनूमांश्चमुहूर्तेनव्यति चक्रामसागरम् ॥ ततोदेवाःसगंधर्वाःसिद्धाश्चपरमर्षयः ॥ ४५ ॥ अब्रुवन्सूर्यसंका शांसुरसांनागमातरम् ॥ अयंवातात्मजःश्रीमान्प्लवतेसागरोपरि ॥ ४६ ॥ हनूमान्नाम तस्यत्वंमुहूर्तंविघ्नमाचर ॥ राक्षसंरूपमास्थायसुघोरंपर्वतोपमम् ॥ ४७ ॥ दंष्ट्राकरा लंपिंगाक्षंवक्त्रंकृत्वानभस्स्पृशम् ॥ बलमिच्छामहेज्ञातुंभूयश्चास्यपराक्रमम् ॥ ४८ ॥ त्वांविजेष्यत्युपायेनविषादंवागमिष्यति ॥ एवमुक्तातुसादेवीदैवतैरभिसत्कृता ॥ ॥ ४९ ॥ समुद्रमध्येसुरसाबिभ्रतीराक्षसंवपुः ॥ विकृतंचविरूपंचसर्वस्यच भयावहम् ॥ १५० ॥ प्लवमानंहनूमंतमावृत्येदमुवाचह ॥ ममभक्ष्यःप्रदिष्टस्त्वमीश्वरै र्वानरर्षभः॥ ५१ ॥ अहंत्वांभक्षयिष्यामिप्रविशेदंममाननम् ॥ एवमुक्तःसुरसयाप्रांज लिर्वानरर्षभः॥ ५२ ॥प्रहृष्टवदनःश्रीमानिदंवचनमब्रवीत् ॥ रामोदाशरथिर्नामप्रवि



१ भयस्य इति पाठः ।

ष्टोदण्डकावनम् ॥ ५३ ॥ लक्ष्मणेनसहभ्रात्रावैदेह्याचापिभार्यया ॥ अन्यकार्यवि
षक्तस्यबद्धवैरस्यराक्षसैः ॥ ५४ ॥ तस्यसीताहृताभार्यारावणेनयशस्विनी ॥ तस्याः
सकाशंदूतोहंगमिष्येरामशासनात् ॥ ५५ ॥ कर्तुमर्हसिरामस्यसाह्यंविषयवासिनि ॥
अथवामैथिलींदृष्ट्वारामंचाक्लिष्टकारिणम् ॥ ५६ ॥ आगमिष्यामितेवक्त्रंसत्यंप्रतिशृ
णोमिते ॥ एवमुक्ताहनुमतासुरसाकामरूपिणी ॥ ५७ ॥ अब्रवीन्नातिवर्त्तेन्मांकश्चिदेष
वरोमम ॥ तंप्रयातंसमुद्वीक्ष्यसुरसावाक्यमब्रवीत् ॥ ५८ ॥ बलंजिज्ञासमानासाना
गमाताहनूमतः ॥ निविश्यवदनंमेऽद्यगंतव्यंवानरोत्तम ॥ ५९ ॥ वरएषपुरादत्तोमम
धात्रेतिसत्वरा ॥ व्यादायविपुलंवक्त्रंस्थितासामारुतेःपुरः ॥ १६० ॥ एवमुक्तःसुरसया
क्रुद्धोवानरपुंगवः ॥ अब्रवीत्कुरुवैवक्त्रंयेनमांविषहिष्यसे ॥ ६१ ॥ इत्युक्त्वासुरसां
क्रुद्धोदशयोजनमायताम् ॥ दशयोजनविस्तारोहनुमानभवत्तदा ॥ ६२ ॥ तंदृष्ट्वा
मेघसंकाशंदशयोजनमायतम् ॥ चकारसुरसाप्यास्यंविंशद्योजनमायतम् ॥ ६३ ॥
तांदृष्ट्वाव्यादितास्यांतुवायुपुत्रःसुबुद्धिमान् ॥ दीर्घजिह्वंसुरसयासुभीमं नरकोपमम्

॥ ६४ ॥ तंदृष्ट्वामेघसंकाशंविंशद्योजनमायतम् ॥ हनूमांस्तुततःक्रुद्धस्त्रिंशद्योजनमातः ॥ ६५ ॥ चकारसुरसावक्रंचत्वारिंशत्तथोच्छ्रितम् ॥ बभूवहनुमान्वीरःपंचाशद्योजनोच्छ्रितः ॥ ६६ ॥ चकारसुरसावक्रंषष्टियोजनमुच्छ्रितम् ॥ तदैवहनुमान्वीरःसं[2]प्ततीयोजनोच्छ्रितः ॥ ६७ ॥ चकारसुरसावक्रमशी[3]तीयोजनायतम् ॥ हनूमानचलप्रख्योनवतीयोजनोच्छ्रितः ॥ ६८ ॥ चकारसुरसावक्रंशतयोजनमायतम् ॥ ससंक्षिप्यात्मनःकायंजीमूतइवमारुतिः ॥ ६९ ॥ तस्मिन्मुहूर्तेहनुमान्बभूवांगुष्ठमात्रकः ॥ सोभिपद्याथतद्वक्रंनिष्पत्यचमहाबलः ॥ १७० ॥ अंतरिक्षेस्थितःश्रीमानिदंवचनमब्रवीत् ॥ प्रविष्टोऽस्मिहितेवक्रंदाक्षायणि नमोस्तुते ॥ ७१ ॥ गमिष्येयत्रवैदेहीसत्यश्चासीद्वरस्तव ॥ तंदृष्ट्वावदनान्मुक्तंचंद्रंराहुमुखादिव ॥ ७२ ॥ अब्रवीत्सुरसादेवीस्वेनरूपेणवानरम् ॥ अर्थसिद्ध्यैहरिश्रेष्ठगच्छसौम्ययथासुखम् ॥ ७३ ॥ समानयचवैदेहींराघवेणमहात्मना ॥ तत्तृतीयंहनुमतोदृष्ट्वाकर्मसुदुष्करम् ॥ ७४ ॥ साधुसाध्वितिभूतानिप्र



---

१ एतच्छ्लोकमारभ्य 'शतयोजनमायतम्' इत्यंताः पञ्च श्लोकाः प्रक्षिप्ता इति कतकः । २ सप्ततिं इति पाठः । ३ अशीति इति पाठः ।

शशंसुस्तदाहरिम् ॥ ससागरमनाधृष्यमभ्येत्यवरुणालयम् ॥ ७५ ॥ जगामाकाश
माविश्यवेगेनगरुडोपमः ॥ सेवितेवारिधाराभिःपतगैश्चनिषेविते ॥ ७६ ॥ चरितेकै
शिकाचार्यैरैरावतनिषेविते ॥ सिंहकुञ्जरशार्दूलपतगोरगवाहनैः ॥७७॥ विमानैःसंपत
द्भिश्चविमलैःसमलंकृते ॥ वज्राशनिसमाघातैःपावकैरिवशोभिते ॥ ७८ ॥ कृतपुण्यैर्म
हाभागैः स्वर्गजिद्भिरधिष्ठिते ॥ वहताहव्यमत्यन्तंसेवितेचित्रभानुना ॥ ७९ ॥ ग्रहन
क्षत्रचंद्रार्कतारागणविभूषिते ॥ महर्षिगणगंधर्वनागयक्षसमाकुले ॥ १८० ॥ विविक्तेवि
मलेविश्वेविश्वावसुनिषेविते ॥ देवराजगजाक्रांतेचन्द्रसूर्यपथेशिवे ॥ ८१ ॥ विता
नेजीवलोकस्यविमलेब्रह्मनिर्मिते ॥ बहुशःसेवितेवीरैर्विद्याधरगणैर्वरैः ॥ ८२ ॥ ज
गामवायुमार्गेचगरुत्मानिवमारुतिः ॥ हनूमान्मेघजालानिप्राकर्षन्मारुतोयथा ॥
॥ ८३ ॥ कालागुरुसवर्णानिरक्तपीतसितानिच ॥ कपिनाकृष्यमाणानिमहाभ्राणिच
काशिरे ॥ ८४ ॥ प्रविशन्नभ्रजालानिनिष्पतंश्चपुनःपुनः ॥ प्रावृषींदुरिवाभातिनिष्पत

---

१ वारिधारादिसेवितत्वादिविशेषणके चन्द्रसूर्यपथे जगामेत्यनेन द्व्यशीत्यधिकशततमपद्यस्थेनान्वयः । कैशिकं गाननृत्यविद्या तदाचार्यैस्तुंबुरुप्रभृतिगंधर्वैः ।
३ ऐरावतं ऋजुदीर्घमिति रामः इन्द्रधनुरितितीर्थः । गजविशेषइत्यन्य । ४ अधिष्ठिते समाघातैः इति पाठः ।

न्प्रविशंस्तथा ॥ ८५ ॥ प्रदृश्यमानःसर्वत्रहनुमान्मारुतात्मजः ॥ भेजेंबरंनिरालंबंपक्ष युक्तइवाद्रिराट् ॥ ८६ ॥ प्लवमानंतुतंदृष्ट्वासिंहिकानामराक्षसी ॥ मनसाचिंतया मासप्रवृद्धाकामरूपिणी ॥ ८७ ॥ अद्यदीर्घस्यकालस्यभविष्याम्यहमाशिता ॥ इदंमम महासत्त्वंचिरस्यवशमागतम् ॥ ८८ ॥ इतिसञ्चिंत्यमनसाछायामस्यसमाक्षिप त् ॥ छायायांगृह्यमाणायांचिंतयामासवानरः ॥ ८९ ॥ समाक्षिप्तोस्मिसहसापंगूकृत पराक्रमः ॥ प्रतिलोमेनवातेनमहानौरिवसागरे ॥ १९० ॥ तिर्यगूर्ध्वमधश्चैववीक्षमाण स्तदाकपिः ॥ ददर्शसमहासत्त्वमुत्थितंलवणांभसि ॥ ९१ ॥ तद्दृष्ट्वाचिंतयामासमा रुतिर्विकृताननाम् ॥ कपिराज्ञायथाख्यातंसत्त्वमद्भुतदर्शनम् ॥ ९२ ॥ छायाग्राहिमहा वीर्यंतदिदंनात्रसंशयः ॥ सतांबुध्वार्थतत्त्वेनसिंहिकांमतिमान्कपिः ॥ ९३ ॥ व्यवर्ध तमहाकायःप्रावृषीवबलाहकः ॥ तस्यसाकायमुद्वीक्ष्यवर्धमानंमहाकपेः ॥ ९४ ॥ व क्त्रंप्रसारयामासपातालांबरसन्निभम् ॥ घनराजीवगर्जंतीवानरंसमभिद्रवत् ॥ ९५ ॥ सददर्शततस्तस्याविकृतंसुमहन्मुखम् ॥ कायमात्रंच मेधावीमर्माणिचमहाकपिः ॥



१ कायमात्रं स्वशरीरकवलपर्याप्तं स्वस्य हनुमतः शरीरस्य कवलने ग्रसने पर्याप्तम् । शरीरप्रमाणमित्यर्थ इति तीर्थः । मात्रशब्दोऽल्पवाचीति कतकः ।

॥ ९६ ॥ सतस्याविकृतेवक्रेवज्रसंहननःकपिः ॥ संक्षिप्यमुहुरात्मानंनिपपातमहा
कपिः ॥ ९७ ॥ आस्येतस्यानिमज्जन्तंददृशुःसिद्धचारणाः ॥ ग्रस्यमानंयथाचंद्रंपू
र्णपर्वणिराहुणा ॥ ९८ ॥ ततस्तस्यनखैस्तीक्ष्णैर्मर्माण्युत्कृत्यवानरः ॥ उत्पपाताथ
वेगेनमनःसंपातविक्रमः ॥ ९९ ॥ तांतुदृष्ट्वासधृत्याचदाक्षिण्येननिपात्यसः ॥ कपिप्र
वीरोवेगेनववृधेपुनरात्मवान् ॥ २०० ॥ हृतहृत्साहनुमतापपातलवणांभसि ॥ स्वयं
भुवैवहनुमान्सृष्टस्तस्यानिपातने ॥ १ ॥ तांहतांवानरेणाशुपतितांवीक्ष्यसिंहिका
म् ॥ भूतान्याकाशचारीणि तमूचुःप्लवगोत्तमम् ॥ २ ॥ भीममद्यकृतंकर्ममहत्सत्त्वं
त्वयाहतम् ॥ साधयार्थमभिप्रेतमरिष्टंगच्छमारुते ॥ ३ ॥ यस्यत्वेतानिचत्वारिवानरें
द्रयथातव ॥ धृतिर्दृष्टिर्मतिर्दाक्ष्यंसकर्मसुनसीदति ॥४॥ स तैःसंपूजितःपूज्यःप्रतिप
न्नप्रयोजनः॥ जगामाकाशमाविश्यपन्नगाशनवत्कपिः ॥५॥ प्राप्तभूयिष्ठपारस्तुसर्वतः
परिलोकयन् ॥ योजनानांशतस्यांतेवनराजिंददर्शसः ॥ ६ ॥ ददर्शचपतन्नेवविविध

१ दिष्ट्या इति पाठः। देवानुग्रहेणेति तदर्थः। २ ध्वस्तहृदयलक्षणप्राणस्थानेत्यर्थः।

10

द्रुमभूषितम् ॥ द्वीपंशाखामृगश्रेष्ठोमलयोपवनानिच ॥ ७ ॥ सागरंसागरानूपंसागरानूपजान्द्रुमान् ॥ सागरस्यचपत्नीनांमुखान्यपिविलोकयत् ॥ ८ ॥ समहामेघसंकाशंसमीक्ष्यात्मानमात्मवान् ॥ निरुंधंतमिवाकाशंचकारमतिमान्मतिम् ॥९॥ कायवृद्धिंप्रवेगंचममदृष्ट्वैवराक्षसाः ॥ मयिकौतूहलंकुर्युरितिमेनेमहामतिः ॥२१०॥ ततःशरीरंसंक्षिप्यतन्महीधरसंन्निभम् ॥ पुनःप्रकृतिमापेदेवीतमोहइवात्मवान् ॥ ११ ॥ तद्रूपमतिसंक्षिप्यहनूमान्प्रकृतौस्थितः ॥ त्रीन्क्रमानिवविक्रम्यबलिवीर्यहरोहरिः ॥ १२ ॥ सचारुनानाविधरूपधारीपरंसमासाद्यसमुद्रतीरम् ॥ परैरशक्यप्रतिपन्नरूपःसमीक्षितात्मासमवेक्षितार्थः ॥ १३ ॥ ततःसलंबस्यगिरेःसमृद्धेविचित्रकूटेनिपपातकूटे ॥ सकेतकोद्दालकनारिकेलेमहाद्रिकूटप्रतिमोमहात्मा ॥ १४ ॥ ततस्तुसंप्राप्यसमुद्रतीरंसमीक्ष्यलंकांगिरिवर्यमूर्ध्नि ॥ कपिस्तुतस्मिन्निपपातपर्वतेविधूयरूपंव्यथयन्मृगद्विजान् ॥ १५ ॥ ससागरंदानवपन्नगायुतंबलेनविक्रम्यमहोर्मिमालिनम् ॥ निपत्यतीरे

१ अनेन उत्तरतीर इव दक्षिणतीरेऽपि मलयाख्यः पर्वतोऽस्तीतिगम्यत इति रामः । २ संगमस्थानानि । ३ अडभाव आर्षः ।

चमहोदधेस्तदाददर्शलंकाममरावतीमिव ॥२१६॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मी
कीयेसुंदरकांडेप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥ ससागरमनाधृष्यमतिक्रम्यमहाबलः ॥
त्रिकूटशिखरेलंकांस्थितांस्वस्थोददर्शह ॥ १ ॥ ततःपादपमुक्तेनपुष्पवर्षेणवीर्यवान् ॥
अभिवृष्टःस्थितस्तत्रबभौपुष्पमयोहरिः ॥ २ ॥ योजनानांशतंश्रीमांस्तीर्त्वाप्युत्तमवि
क्रमः ॥ अनिःश्वसन्कपिस्तत्रनग्लानिमधिगच्छति ॥ ३ ॥ शतान्यहंयोजनानांक्रमेयं
सुबहून्यपि ॥ किंपुनःसागरस्यांतंसंख्यातंशतयोजनम् ॥ ४ ॥ सतुवीर्यवतांश्रेष्ठः
प्लवतामपिचोत्तमः ॥ जगामवेगवान्लंकांलंघयित्वामहोदधिम् ॥५॥शाद्वलानिचनीला
निगंधवंतिवनानिच॥पुष्पवंतिचमध्येनजगामनगवंतिच ॥ ६ ॥ शैलांश्चतरुसंछन्नान्व
नराजीश्चपुष्पिताः ॥ अभिचक्रामतेजस्वीहनूमान्प्लवगर्षभः ॥ ७ ॥ सतस्मिन्नचलेति
ष्ठन्वनान्युपवनानिच ॥ सनगाग्रेस्थितांलंकांददर्शपवनात्मजः ॥ ८ ॥ सरलान्कर्णि
कारांश्चखर्जूरांश्चसुपुष्पितान् ॥प्रियालान्मुचुलिंदांश्च कुटजान्केतकानपि ॥ ९ ॥ प्रियंगू

१ त्रिकूटस्य तले इति पाठः । त्रिकूटस्य लंबपर्वत इत्यपरपर्यायः । २ मधुमंति इति पाठः । ३ पिचुमंदांश्च इति पाठः । मुचुलिन्दा जंबीरा इत्याहुरिति रामः ।

न्गंधपूर्णांश्चनीपान्सप्तच्छादास्तथा॥असनान्कोविदारांश्चकरवीरांश्चपुष्पितान् ॥१०॥ पुष्पभारनिबद्धांश्चतथामुकुलितानपि ॥ पादपान्विहगाकीर्णान्पवनाधूतमस्तकान् ॥ ॥ ११ ॥ हंसकारंडवाकीर्णावापीःपद्मोत्पलावृताः ॥ आक्रीडान्विविधान्रम्यान्विविधांश्चजलाशयान् ॥ १२ ॥ संततान्विविधैर्वृक्षैःसर्वर्तुफलपुष्पितैः ॥ उद्यानानिचरम्याणिददर्शकपिकुञ्जरः ॥ १३ ॥ समासाद्यचलक्ष्मीवाँल्लंकांरावणपालिताम् ॥ परिखाभिःसपद्माभिःसोत्पलाभिरलंकृताम् ॥ १४ ॥ सीतापहरणात्तेनरावणेनसुरक्षिताम् ॥ समंताद्विचरद्भिश्चराक्षसैरुग्रधन्विभिः ॥ १५ ॥ कांचनेनवृतांरम्यांप्राकारेणमहापुरीम् ॥ गृहैश्चगिरिसंकाशैःशारदांबुदसंनिभैः ॥१६ ॥ पांडुराभिःप्रतोलीभिरुच्चाभिरभिसंवृताम् ॥ अट्टालकशताकीर्णांपताकाध्वजशोभिताम् ॥ १७॥ तोरणैःकांचनैर्दिव्यैर्लतापंक्तिविराजितैः ॥ ददर्शहनुमाँल्लंकांदिविदेवपुरीमिव ॥ १८ ॥ गिरिमूर्ध्निस्थितांलंकांपाण्डुरैर्भवनैःशुभैः ॥ ददर्शसकपिःश्रीमान्पुरमाकाशगामिव ॥

१ आक्रीडाःक्रीडापर्वताइति कतकः । साधरणोद्यानान्याक्रीडा इत्यन्ये । राज्ञामसाधरणोंद्यानान्याक्रीडा इति तीर्थः । २ देवः इति पाठः ।

॥ १९ ॥ पालितारावसेंद्रेणनिर्मितांविश्वकर्मणा ॥ प्लवमानामिवाकाशेददर्शहनुमा
न्कपिः॥२०॥ वप्रप्राकारजघनांविपुलांबुनवांबराम् ॥ शतघ्नीशूलकेशांतामट्टालकावतं
सकाम् ॥ २१ ॥ मनसेवकृतांलंकांनिर्मितांविश्वकर्मणा ॥ द्वारमुत्तरमासाद्यचिंतयामा
सवानरः॥२२॥ कैलासनिलयप्रख्यमालिखंतमिवांबरम्॥ ध्रियमाणमिवाकाशमुच्छ्रि
तैर्भवनोत्तमैः ॥ २३ ॥ संपूर्णांराक्षसैर्घोरैर्नागैर्भोगवतीमिव ॥ अचिंत्यांसुकृतप्रख्यां
कुबेराध्युषितांपुरा ॥२४॥ दंष्ट्रिभिर्बहुभिःशूरैः शूलपट्टिशपाणिभिः ॥ रक्षितांराक्षसैर्घो
रैर्गुहामाशीविषैरिव ॥ २५ ॥ तस्याश्चमहतींगुप्तिंसागरंचानिरीक्ष्यसः ॥ रावणंचरिपुं
घोरंचिंतयामासवानरः ॥ २६ ॥ आगत्यापीहहरयोभविष्यंतिनिरर्थकाः ॥ नहियुद्धेन
वैलंकाशक्याजेतुंसुरैरपि ॥ २७ ॥ इमांतुविषमांलंकांदुर्गांरावणपालिताम् ॥
प्राप्यापिसुमहाबाहुः किंकरिष्यतिराघवः ॥ २८ ॥ अवकाशोनशान्तस्यराक्षसे
ष्वभिगम्यते ॥ नदानस्यनभेदस्यनैवयुद्धस्यदृश्यते ॥ २९ ॥ चतुर्णामेवहि
गतिर्वानराणांतरस्विनाम् ॥ वालिपुत्रस्यनीलस्यममराज्ञश्चधीमतः ॥ ३० ॥ या

वज्ञानामिवैदेहींयदिजीवतिवानवा ॥ तत्रैवचिन्तयिष्यामिदृष्ट्वातांजनकात्मजाम् ॥ ॥ ३१ ॥ ततःसचिंतमायासमुहूर्तंकपिकुञ्जरः ॥ गिरेःशृंगेस्थितस्तस्मिन्रामस्याभ्यु दयंततः ॥ ३२ ॥ अनेनरूपेणमयानशक्यारक्षसांपुरी ॥ प्रवेष्टुंराक्षसैर्गुप्ताक्रूरैर्बल समन्वितैः ॥ ३३ ॥ उग्रौजसोमहावीर्याबलवंतश्चराक्षसाः ॥ वंचनीयामयासर्वेजानकीं परिमार्गता ॥ ३४ ॥ लक्ष्यालक्ष्येणरूपेणरात्रौलंकापुरीमया ॥ प्राप्तकालंप्रवेष्टुंमे कृत्यंसाधयितुंमहत् ॥ ३५ ॥ तांपुरींतादृशींदृष्ट्वादुराधर्षांसुरासुरैः ॥ हनुमांश्चिन्त यामासविनिःश्वस्यमुहुर्मुहुः ॥ ३६ ॥ केनोपायेनपश्येयंमैथिलींजनकात्मजाम् ॥ अदृष्टोराक्षसेन्द्रेणरावणेनदुरात्मना ॥ ३७ ॥ नविनश्येत्कथंकार्यंरामस्यविदिता त्मनः ॥ एकामेकस्तुपश्येयंरहितेजनकात्मजाम् ॥ ३८ ॥ भूताश्चार्थाविनश्यंतिदेश कालविरोधिताः ॥ विक्लवंदूतमासाद्यतमः सूर्योदयेयथा ॥ ३९ ॥ अर्थानर्थांतरेबुद्धिर्नि श्चितापिनशोभते॥घातयंतिहिकार्याणिदूताः पण्डितमानिनः ॥ ४० ॥ नविनश्येत्क

१ महौजसः इति पाठः । २ सिद्धप्रायकार्याणीत्यर्थः ।

थंकार्यंवैक्लव्यंनकथंभवेत् ॥ लंघनंचसमुद्रस्यकथंनुनभवेद्वृथा ॥ ४१ ॥ मयि दृष्टेतुरक्षोभीरामस्यविदितात्मनः ॥ भवेद्व्यर्थमिदंकार्यंरावणानर्थमिच्छतः ॥ ४२ ॥ नहिशक्यंक्वचित्स्थातुमविज्ञातेनराक्षसैः ॥ अपिराक्षसरूपेणकिमुतान्येनकेनचित् ॥ ४३ ॥ वायुरप्यत्रनाज्ञातश्चरेदितिमतिर्मम ॥ नह्यस्त्यविदितंकिंचिद्रक्षसांभीमकर्मणाम् ॥ ४४ ॥ इहाहंयदितिष्ठामिस्वेनरूपेणसंवृतः ॥ विनाशमुपयास्यामि भर्तुरर्थश्चहास्यति ॥ ४५ ॥ तदहंस्वेनरूपेणरजन्यांह्रस्वतांगतः ॥ लंकामभिपतिष्यामिराघवस्यार्थसिद्धये ॥ ४६ ॥ रावणस्यपुरींरात्रौप्रविश्यसुदुरासदाम् ॥ विचिन्वन्भवनंसर्वंद्रक्ष्यामिजनकात्मजाम् ॥ ४७ ॥ इतिनिश्चित्यहनुमान्सूर्यस्यास्तमयं कपिः ॥ आचकांक्षेतदावीरोवैदेह्यादर्शनोत्सुकः ॥ ४८ ॥ सूर्येचास्तंगते रात्रौदेहं संक्षिप्यमारुतिः ॥ वृषदंशकमात्रोथबभूवाद्भुतदर्शनः ॥ ४९ ॥ प्रदोषकाले हनुमांस्तूर्णमुत्प्लुत्य वीर्यवान् ॥ प्रविवेशपुरींरम्यांप्रविभक्तमहापथाम् ॥ ५० ॥

---

१ पृषदंशकमात्रक इति पाठः। वृषदंशकमात्रकः। वृषदंशको मूषकदंशकोमार्जारस्तत्प्रमाण इति रामाभिरामीयतिलके। पृषदंशकमात्रकः–अत्यल्पविन्दुप्रमाणः।

प्रासादमालावितताःस्तम्भैः कांचनसन्निभैः ॥ शातकुम्भनिभैर्जालैर्गन्धर्वनगरोपमाम् ॥ ५१ ॥ सप्तभौमाष्टभौमैश्च सददर्श महापुरीम् ॥ स्थलैः स्फटिकसंकीर्णैः कार्तस्वरविभूषितैः ॥ ५२ ॥ वैदूर्यमणिचित्रैश्च मुक्ताजालविराजितैः ॥ तलैः शुशुभिरे तानिभवनान्यत्र रक्षसाम् ॥ ५३ ॥ कांचनानि विचित्राणि तोरणानि च रक्षसाम् ॥ लंकामुद्द्योतयामासुःसर्वतःसमलंकृताम् ॥ ५४ ॥ अचिंत्यामद्भुताकारां दृष्ट्वालंकांमहाकपिः ॥ आसीद्विषण्णोहृष्टश्च वैदेह्यादर्शनोत्सुकः ॥ ५५ ॥ संपाण्डुरोद्विद्धविमानमालिनीं महार्हजांबूनदजालतोरणाम् ॥ यशस्विनीं रावणबाहुपालितां क्षपाचरैर्भीमबलैः सुपालिताम् ॥ ५६ ॥ चन्द्रोपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन् ॥ ज्योत्स्नावितानेनवितत्यलोकानुत्तिष्ठतेऽनेकसहस्ररश्मिः ॥ ५७ ॥ शंखप्रभं क्षीरमृणालवर्णमुद्गच्छमानं व्यवभासमानम् ॥ ददर्श चंद्रंसकपिप्रवीरः पोप्लूयमानंसरसीव हंसम् ॥ ५८ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेसुन्दरकांडेद्वितीयःसर्गः ॥ २ ॥ सलंबशिखरेलंबेलंबतोयदसन्निभे॥

१ सप्तभौमाष्टभौमैः—सप्ताष्टसंख्यावयवयुक्तैर्भूमिनां समूहैःप्रासादैरुपलक्षिताम् । २ तलैः इति पाठः । ३ सपाण्डुराविद्धविमानमालिनीमिति पाठः ।

सत्त्वमास्थायमेधावीहनूमान्मारुतात्मजः ॥ १ ॥ निशिलंकांमहासत्त्वोविवेशकपिकुं
जरः ॥ रम्यकाननतोयाढ्यांपुरींरावणपालिताम् ॥२॥ शारदांबुधरप्रख्यैर्भवनैरुपशो
भिताम् ॥ सागरोपमनिर्घोषांसागरानिलसेविताम् ॥ ३॥ सुपुष्टबलसंपुष्टांयथैवविटपा
वतीम् ॥ चारुतोरणनिर्यूहांपांडुरद्वारतोरणाम् ॥ ४ ॥ भुजगाचरितांगुप्तांशुभांभोगव
तीमिव ॥ तांसविद्युद्घनाकीर्णां ज्योतिर्गणनिषेविताम् ॥ ५ ॥ चण्डमारुतनिर्ह्रादांय
थाचाप्यमरावतीम् ॥ शातकुंभेनमहताप्राकारेणाभिसंवृताम् ॥ ६ ॥ किंकिणीजाल
घोषाभिःपताकाभिरलंकृताम् ॥ आसाद्यसहसाहृष्टः प्राकारमभिपेदिवान् ॥ ७ ॥
विस्मयाविष्टहृदयःपुरीमालोक्यसर्वतः ॥ जाबूनदमयैर्द्वारैर्वैदूर्यकृतवेदिकैः ॥ ८ ॥
मणिस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः ॥ तप्तहाटकनिर्यूहै राजतामलपांडुरैः ॥
॥ ९ ॥ वैदूर्यकृतसोपानैः स्फाटिकान्तरपांसुभिः ॥ चारुसंजवनोपेतैःखमिवोत्पतितैः
शुभैः ॥ १० ॥ क्रौंचबर्हिणसंघुष्टैराजहंसनिषेवितैः ॥ तूर्याभरणनिर्घोषैःसर्वतःपरि
नादिताम् ॥ ११ ॥ वस्वेकसारप्रतिमांसमीक्ष्यनगरींततः ॥ खमिवोत्पतितांलंकां

१ वस्वोकसारप्रतिमाम् इति पाठः ।

जहर्ष हनुमान्कपिः ॥ १२ ॥ तांसमीक्ष्यपुरींलंकां राक्षसाधिपतेःशुभाम् ॥ अनु त्तमामृद्धिमतींचिन्तयामासवीर्यवान् ॥ १३ ॥ नेयमन्येननगरीशक्याधर्षयितुंब लात् ॥ रक्षितारावणबलैरुद्यतायुधपाणिभिः ॥ १४ ॥ कुमुदांगदयोर्वापिसुषेणस्यम हाकपेः ॥ प्रसिद्धेयंभवेद्भूमिर्मैन्दद्विविदयोरपि ॥ १५ ॥ विवस्वतस्तनूजस्यहरेश्चकुश पर्वणः ॥ ऋक्षस्यकपिमुख्यस्यममचैवगतिर्भवेत् ॥ १६ ॥ समीक्ष्यचमहाबाहूरा घवस्यपराक्रमम् ॥ लक्ष्मणस्यचविक्रांतमभवत्प्रीतिमान्कपिः ॥ १७ ॥ तांरत्नवसनो पेतांगोष्ठागारावतंसकाम् ॥ यंत्रागारस्तनीमृद्धांप्रमदामिवभूषिताम् ॥ १८ ॥ तांनष्ट तिमिरांदीपैर्भास्वरैश्चमहागृहैः ॥ नगरींराक्षसेंद्रस्यसददर्शमहाकपिः ॥ १९ ॥ अथ साहरिशार्दूलंप्रविशंतंमहाकपिम् ॥ नगरीस्वेनरूपेण ददर्शपवनात्मजम् ॥ २० ॥ सातंहरिवरंदृष्ट्वालंकारावणपालिता ॥ स्वयमेवोत्थितातत्रविकृताननदर्शना ॥ २१ ॥ पुरस्तात्तस्यवीरस्यवायुसूनोरतिष्ठत ॥मुंचमानामहानादमब्रवीत्पवनात्मजम् ॥२२॥ कस्त्वंकेनचकार्येण इहप्राप्तोवनालय ॥ कथयस्वेहयत्तत्त्वं यावत्प्राणान्धरिष्यसि ॥

॥ २३ ॥ नशक्याखल्वियंलंका प्रवेष्टुंवानर त्वया ॥ रक्षितारावणबलैरभिगुप्ता
समंततः ॥ २४ ॥ अथतामब्रवीद्वीरोहनूमानग्रतःस्थिताम् ॥ कथयिष्यामिते
तत्त्वंयन्मांत्वंपरिपृच्छसि ॥ २५ ॥ कात्वं विरूपनयनापुरद्वारेऽवतिष्ठसि ॥ कि
मर्थंचापिमां क्रोधान्निर्भर्त्सयसिदारुणा ॥ २६ ॥ हनूमद्वचनंश्रुत्वा लंकासा
कामरूपिणी ॥ उवाचवचनंक्रुद्धापरुषंपवनात्मजम् ॥ २७ ॥ अहंराक्षसराज
स्यरावणस्यमहात्मनः ॥ आज्ञाप्रतीक्षादुर्धर्षा रक्षामिनगरीमिमाम् ॥ २८ ॥
नशक्यंमामवज्ञाय प्रवेष्टुंनगरीमिमाम् ॥ अद्यप्राणैः परित्यक्तः स्वप्स्यसेनिह
तोमया ॥ २९ ॥ अहंहिनगरीलंका स्वयमेवप्लवंगम ॥ सर्वतःपरिरक्षामिअत
स्तेकथितंमया ॥ ३० ॥ लंकायावचनंश्रुत्वाहनूमान्मारुतात्मजः ॥ यत्नवान्स
हरिश्रेष्ठःस्थितः शैलइवापरः ॥ ३१ ॥ सतांस्त्रीरूपविकृतां दृष्ट्वावानरपुंगवः ॥
आबभाषेऽथमेधावी सत्त्ववान्प्लवगर्षभः ॥ ३२ ॥ द्रक्ष्यामिनगरींलंकां साट्टप्राकार
तोरणाम् ॥ इत्यर्थमिहसंप्राप्तः परंकौतूहलंहि मे ॥ ३३ ॥ वनान्युपवनानीहलं

कायाःकाननानिच ॥ सर्वतोगृहमुख्यानि द्रष्टुमागमनंहि मे ॥ ३४ ॥ तस्यतद्व
चनंश्रुत्वा लंकासाकामरूपिणी ॥ भूयएवपुनर्वाक्यंबभाषेपरुषाक्षरम् ॥ ३५ ॥
मामनिर्जित्यदुर्बुद्धे राक्षसेश्वरपालिताम् ॥ नशक्याह्यद्यतेद्रष्टुं पुरीयंवानराधम ॥
॥ ३६ ॥ ततःसहरिशार्दूलस्तामुवाचनिशाचरीम् ॥ दृष्ट्वापुरीमिमांभद्रेपुनर्यास्येय
थागतम् ॥ ३७ ॥ ततःकृत्वामहानादं सावैलंकाभयंकरम् ॥ तलेनवानरश्रेष्ठंताड
यामासवेगिता ॥ ३८ ॥ ततःसहरिशार्दूलोलंकयाताडितोभृशम् ॥ ननादसुमहा
नादं वीर्यवान्मारुतात्मजः ॥३९॥ ततःसंवर्तयामासवामहस्तस्यसोंगुलीः ॥ मुष्टिना
भिजघानैनांहनूमान्क्रोधमूर्च्छितः ॥ ४० ॥ स्त्रीचेतिमन्यमानेननातिक्रोधःस्वयंकृ
तः ॥ सातुतेनप्रहारेणविह्वलांगीनिशाचरी ॥ पपातसहसाभूमौविकृताननदर्शना ॥
॥ ४१ ॥ ततस्तुहनुमान्वीरस्तांदृष्ट्वाविनिपातिताम् ॥ कृपांचकारतेजस्वीमन्यमा
नः स्त्रियंचताम् ॥ ४२ ॥ ततोवैभृशमुद्विग्नालंकासागद्गदाक्षरम् ॥ उवाचागर्वितं
वाक्यंहनूमंतंप्लवंगमम् ॥ ४३ ॥ प्रसीद सुमहाबाहोत्रायस्वहरिसत्तम ॥ समये सौम्य

तिष्ठंतिसत्ववंतोमहाबलाः ॥ ४४ ॥ अहंतुनगरीलंकास्वयमेवप्लवंगम ॥ निर्जिताहं त्वयावीरविक्रमेणमहाबल ॥ ४५ ॥ इदंचतथ्यंशृणुमेब्रुवंत्यावैहरीश्वर ॥ स्वयंभुवा पुरादत्तंवरदानंयथामम ॥ ४६ ॥ यदात्वांवानरः कश्चिद्विक्रमाद्वशमानयेत् ॥ तदा त्वयाहिविज्ञेयंरक्षसांभयमागतम् ॥ ४७ ॥ स हि मे समयः सौम्य प्राप्तोऽद्य तवदर्शनात् ॥ स्वयंभूविहितः सत्योनतस्यास्तिव्यतिक्रमः ॥ ४८ ॥ सीतानिमित्तंरा ज्ञस्तुरावणस्यदुरात्मनः ॥ रक्षसांचैवसर्वेषांविनाशः समुपागतः ॥ ४९ ॥ तत्प्रवि श्यहरिश्रेष्ठपुरीं रावणपालिताम् ॥ विधत्स्वसर्वकार्याणियानियानीहवांछसि ॥ ५० ॥ प्रविश्यशापोपहतांहरीश्वरः पुरींशुभांराक्षसमुख्यपालिताम् ॥ यदृच्छयात्वंजन कात्मजांसतींविमार्गसर्वत्रगतोयथासुखम् ॥ ५१ ॥ इत्यार्षे श्रीमद्रामायणे वा ल्मीकीये आदिकाव्ये सुन्दरकांडे तृतीयःसर्गः ॥ ३ ॥ सनिर्जित्यपुरींलंकांश्रेष्ठां तांकामरूपिणीम् ॥ विक्रमेणमहातेजाहनूमान्कपिसत्तमः ॥ १ ॥ अद्वारेणमहा वीर्यःप्राकारमभिपुप्लुवे ॥ निशिलंकांमहासत्वोविवेशकपिकुंजरः ॥ २ ॥ प्रविश्यनग

कायाःकाननानिच ॥ सर्वतोगृहमुख्यानि द्रष्टुमागमनंहि मे ॥ ३४ ॥ तस्यतद्व
चनंश्रुत्वा लंकासाकामरूपिणी ॥ भूयएवपुनर्वाक्यंबभाषेपरुषाक्षरम् ॥ ३५ ॥
मामनिर्जित्यदुर्बुद्धे राक्षसेश्वरपालिताम् ॥ नशक्याह्यद्यतेद्रष्टुं पुरीयंवानराधम ॥
॥ ३६ ॥ ततःसहरिशार्दूलस्तामुवाचनिशाचरीम् ॥ दृष्ट्वापुरीमिमांभद्रेपुनर्यास्येय
थागतम् ॥ ३७ ॥ ततःकृत्वामहानादं सावैलंकाभयंकरम् ॥ तलेनवानरश्रेष्ठंताड
यामासवेगिता ॥ ३८ ॥ ततःसहरिशार्दूलोलंकयाताडितोभृशम् ॥ ननादसुमहा
नादं वीर्यवान्मारुतात्मजः ॥३९॥ ततःसंवर्तयामासवामहस्तस्यसोंगुलीः ॥ मुष्टिना
भिजघानैनांहनूमान्क्रोधमूर्च्छितः ॥ ४० ॥ स्त्रीचेतिमन्यमानेननातिक्रोधःस्वयंकृ
तः ॥ सातुतेनप्रहारेणविह्वलांगीनिशाचरी ॥ पपातसहसाभूमौविकृताननदर्शना ॥
॥ ४१ ॥ ततस्तुहनुमान्वीरस्तांदृष्ट्वाविनिपातिताम् ॥ कृपांचकारतेजस्वीमन्यमा
नः स्त्रियंचताम् ॥ ४२ ॥ ततोवैभृशमुद्विग्नालंकासागद्गदाक्षरम् ॥ उवाचागर्वितं
वाक्यंहनूमंतंप्लवंगमम् ॥ ४३ ॥ प्रसीद सुमहाबाहोत्रायस्वहरिसत्तम ॥ समये सौम्य

तिष्ठंतिसत्ववंतोमहाबलाः ॥ ४४ ॥ अहंतुनगरीलंकास्वयमेवप्लवंगम ॥ निर्जिताहं त्वयावीरविक्रमेणमहाबल ॥ ४५ ॥ इदंचतथ्यंशृणुमेब्रुवंत्यावैहरीश्वर ॥ स्वयंभुवा पुरादत्तंवरदानंयथामम ॥ ४६ ॥ यदात्वांवानरः कश्चिद्विक्रमाद्वशमानयेत् ॥ तदा त्वयाहिविज्ञेयंरक्षसांभयमागतम् ॥ ४७ ॥ स हि मे समयः सौम्य प्राप्तोऽद्य तवदर्शनात् ॥ स्वयंभूविहितः सत्योनतस्यास्तिव्यतिक्रमः ॥ ४८ ॥ सीतानिमित्तंरा ज्ञस्तुरावणस्यदुरात्मनः ॥ रक्षसांचैवसर्वेषांविनाशः समुपागतः ॥ ४९ ॥ तत्प्रवि श्यहरिश्रेष्ठपुरीं रावणपालिताम् ॥ विधत्स्वसर्वकार्याणियानियानीहवांछसि ॥ ५० ॥ प्रविश्यशापोपहतांहरीश्वरः पुरींशुभांराक्षसमुख्यपालिताम् ॥ यदृच्छयात्वंजन कात्मजांसतींविमार्गसर्वत्रगतोयथासुखम् ॥ ५१ ॥ इत्यार्षे श्रीमद्रामायणे वा ल्मीकीये आदिकाव्ये सुन्दरकांडे तृतीयःसर्गः ॥ ३ ॥ सनिर्जित्यपुरींलंकांश्रेष्ठां तांकामरूपिणीम् ॥ विक्रमेणमहातेजाहनूमान्कपिसत्तमः ॥ १ ॥ अद्वारेणमहा वीर्यःप्राकारमभिपुप्लुवे ॥ निशिलंकांमहासत्वोविवेशकपिकुंजरः ॥ २ ॥ प्रविश्यनग

16

रीलंकांकपिराजहितंकरः ॥ चक्रेथपादंसव्यंचशत्रूणांसतुमूर्धनि ॥ ३ ॥ प्रविष्टः स त्वसंपन्नोनिशायांमारुतात्मजः ॥ समहापथमास्थायमुक्तपुष्पविराजितम् ॥४॥ तत स्तुतांपुरीलंकांरम्यामभिययौकपिः ॥ हसितोत्कृष्टनिनदैस्तूर्यघोषपुरस्कृतैः ॥ ५ ॥ व ज्राकुशनिकाशैश्चवज्रजालविभूषितैः ॥ गृहमेधैःपुरीरम्याबभासेद्यौरिवांबुदैः ॥६॥ प्रज ज्वालतदालंकारक्षोगणगृहैःशुभैः ॥ सिताभ्रसदृशैश्चित्रैःपद्मस्वस्तिकसंस्थितैः ॥७॥ वर्धमानगृहैश्चापिसर्वतःसुविभूषिता ॥ गृहमुख्यैः पुरीरम्याबभासेद्यौरिवांबुदैः ॥ तां चित्रमाल्याभरणांकपिराजहितंकरः ॥ ८ ॥ राघवार्थंचरञ्छ्रीमान्ददर्शचननंदच ॥ भवनाद्भवनंगच्छन्ददर्शकपिकुंजरः ॥ ९ ॥ विविधाकृतिरूपाणिभवनानिततस्ततः ॥ शुश्रावरुचिरंगीतंत्रिस्थानस्वरभूषितम् ॥ १० ॥ स्त्रीणांमदनविद्धानांदिविचाप्स रसामिव ॥ शुश्रावकांचीनिनदंनूपुराणांचनिःस्वनम् ॥ ११ ॥ सोपाननिनदांश्चापि भवनेषुमहात्मनाम् ॥ आस्फोटितनिनादांश्चक्ष्वेडितांश्चततस्ततः ॥ १२ ॥ शुश्राव



१ सुविभूषितैः इति पाठः ।

जपतांतत्र मंत्रान्रक्षोगृहेषु वै ॥ स्वाध्यायनिरतांश्चैव यातुधानान्ददर्शसः ॥ १३ ॥ रावणस्तवसंयुक्तान्गर्जतो राक्षसानपि ॥ राजमार्गं समावृत्य स्थितं रक्षोगणं महत् ॥
॥ १४ ॥ ददर्श मध्यमेगुल्मे राक्षसस्य चरान्बहून् ॥ दीक्षिताञ्जटिलान्मुंडान्गोजिनांबरवाससः ॥ १५ ॥ दर्भमुष्टिप्रहरणानग्निकुंडायुधांस्तथा ॥ कूटमुद्गरपाणींश्च दंडायुधधरानपि ॥ १६ ॥ एकाक्षानेककर्णांश्च चलल्लंबपयोधरान् ॥ करालान्भुग्नवक्त्रांश्च विकटान्वामनांस्तथा ॥ १७ ॥ धन्विनः खड्गिनश्चैव शतघ्नीमुसलायुधान् ॥ परिघोत्तमहस्तांश्चविचित्रकवचोज्ज्वलान् ॥ १८ ॥ नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान् ॥ नातिगौरान्नातिकृष्णान्नातिकुब्जान्नवामनान् ॥ १९ ॥ विरूपान्बहुरूपांश्च सुरूपांश्चसुवर्चसः ॥ ध्वजिनःपताकिनश्चैव ददर्शविविधायुधान् ॥ २० ॥ शक्तिवृक्षायुधांश्चैव पट्टिशाशनिधारिणः ॥ क्षेपणीपाशहस्तांश्च ददर्श समहाकपिः ॥ २१ ॥ स्रग्विणस्त्वनुलिप्ताश्च वराभरणभूषितान् ॥ नानावेषसमायुक्तान्यथास्वैरचरान्बहून् ॥
॥ २२ ॥ तीक्ष्णशूलधरांश्चैव वज्रिणश्चमहाबलान् ॥ शतसाहस्रमव्यग्रमारक्षंमध्यमं

कपिः ॥ २३ ॥ रक्षोधिपतिनिर्दिष्टंददर्शांतःपुराग्रतः ॥ स तदा तद्गृहं दृष्ट्वामहाहाटकतोरणम् ॥ २४ ॥ राक्षसेंद्रस्य विख्यातमद्रिमूर्ध्नि प्रतिष्ठितम् ॥ पुंडरीकावतंसाभिः परिखाभिः समावृतम् ॥ २५ ॥ प्राकारावृतमत्यंतं ददर्श समहाकपिः ॥ त्रिविष्टपनिभं दिव्यं दिव्यनादविनादितम् ॥ २६ ॥ वाजिह्रेषितसंघुष्टं नादितं भूषणैस्तथा ॥ रथैर्यानैर्विमानैश्च तथा हयगजैः शुभैः॥ २७ ॥ वारणैश्चचतुर्दंतैः श्वेताभ्रनिचयोपमैः ॥ भूषितंरुचिरद्वारंमत्तैश्च मृगपक्षिभिः ॥ २८ ॥ रक्षितं सुमहावीर्यैर्यातुधानैःसहस्रशः॥ राक्षसाधिपतेर्गुप्तमाविवेशगृहं कपिः ॥२९॥ सहेमजांबूनदचक्रवालं महार्हमुक्तामणिभूषितांतम् ॥ परार्ध्यकालागुरुचंदनार्हंसरावणांतःपुरमाविवेश ॥ ३० ॥ इत्यार्षेश्रीमद्रा० वा० सुं० चतुर्थःसर्गः ॥ ४ ॥ ॥ ७ ॥ " चंद्रोपि साचिव्यमिवास्यकुर्वंस्तारागणैर्मध्यगतोविराजन् ॥ ज्योत्स्नावितानेननिपत्य लोकानुत्तिष्ठते नैकसहस्ररश्मिः ॥ १ ॥ शंखप्रभं क्षीरमृणालवर्णं ह्युद्गम्यमानं ॥ ह्यवभासमानम् ॥ ददर्शचंद्रंस कपिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥ २ ॥ ततः स मध्यंगतमंशुमंतं ज्योत्स्नावितानं

मुहुरुद्भमंतम् ॥ ददर्श धीमान्दिवि भानुमंतं गोष्ठे वृषं मत्तमिव भ्रमंतम् ॥ ३ ॥ लोकस्य पापानि विनाशयंतं महोदधिं चापि समेधयंतम्॥ भूतानि सर्वाणि विराजयंतं ददर्श शीतांशुमथाभियांतम् ॥ ४ ॥ या भाति लक्ष्मीर्भुवि मंदरस्था यथाप्रदोषेषुच सागरस्था ॥ तथैव तोयेषु च पुष्करस्था रराज सा चारुनिशाकरस्था ॥ ५ ॥ हंसो यथा राजतपंजरस्थःसिंहोयथामंदरकंदरस्थः ॥ वीरो यथा गर्वितकुंजरस्थश्चंद्रोपि बभ्राज तथांऽबरस्थः ॥ ६ ॥ स्थितःककुद्मानिव तीक्ष्णशृंगो महाचलः श्वेत इवोर्ध्वशृंगः ॥ हस्तीवजांबूनदबद्धशृंगो विभाति चंद्रः परिपूर्णशृंगः ॥ ७ ॥ विनष्टशीतांबुतुषारपंको महाग्रहग्राहविनष्टपंकः ॥ प्रकाशलक्ष्म्याश्रयनिर्मलांको रराज चंद्रो भगवाञ्छशांकः ॥ ८ ॥ शिलातलं प्राप्य यथा मृगेन्द्रो महारणं प्राप्य यथा गजेन्द्रः ॥ राज्यं समासाद्य यथा नरेंद्रस्तथाप्रकाशो विरराज चंद्रः॥ ९ ॥ प्रकाशचंद्रोदयनष्टदोषःप्रवृद्धरक्षःपिशिताशदोषः॥ रामाभिरामेरितचित्तदोषःस्वर्गप्रकाशो भगवान्प्रदोषः॥ १० ॥ तंत्रीस्वराः कर्णसुखाःप्रवृत्ताःस्वपंति नार्यः पतिभिःसुवृत्ताः ॥ नक्तंचराश्चापि तथा प्रवृ

त्ता विहर्तुमत्यद्भुतरौद्रवृत्ताः॥ ११ ॥ मत्तप्रमत्तानिसमाकुलानिरथाश्वभद्रासनसंकुलानि॥वीरश्रियाचापि समाकुलानि ददर्श धीमान्स कपिः कुलानि॥ १२ ॥ परस्परं चाधिकमाक्षिपंति भुजांश्च पीनानधिविक्षिपंति॥मत्तप्रलापानधिविक्षिपंति मत्तानि चान्योन्यमाधिक्षिपंति ॥ १३ ॥ रक्षांसि वक्षांसि च विक्षिपंति गात्राणि कांतासु च विक्षिपंति ॥ रूपाणि चित्राणि च विक्षिपंति दृढानि चापानि च विक्षिपंति ॥ १४ ॥ ददर्श कांताश्च समालभंत्यस्तथापरास्तत्र पुनःस्वपंत्यः ॥ सुरूपवक्राश्च तथा हसंत्यःक्रुद्धाःपराश्चापि विनिःश्वसंत्यः॥ १५॥ महागजैश्चापितथानदद्भिःसुपूजितैश्चापितथासुसद्भिः ॥ रराज वीरैश्च विनिःश्वसद्भिर्ह्रदो भुजंगैरिव निःश्वसद्भिः ॥ १६ ॥ बुद्धिप्रधानान्रुचिराभिधानान्संश्रद्दधानाञ्जगतःप्रधानान् ॥ नानाविधानान्रुचिराभिधानान्ददर्श तस्यां पुरि यातुधानान् ॥ १७ ॥ननंद दृष्ट्वा च स तान्सुरूपान्नानाविधानात्मगुणानुरू

---

१ विक्षिपंति–आस्फालयंति। २ न्यरयंति। ३ कुर्वंति। ४ विस्फारयन्ति। एतानि चत्वारि शतृप्रत्ययान्तानि। ५ द्वितीयार्थे एतच्छ्लोकस्थाः प्रथमाः ददर्शेत्यस्य कर्मभूताः।

पान् ॥ विद्योतमानान्सचतान्सुरूपान्ददर्शकांश्चिच्चपुनर्विरूपान् ॥ १८ ॥ ततोवरार्हाः स विशुद्धभावास्तेषां स्त्रियस्तत्र महानुभावाः ॥ प्रियेषु पानेषु च सक्तभावा ददर्श तारा इवसुप्रभावाः ॥ १९ ॥ श्रियाज्वलंतीस्त्रपयोपगूढा निशीथकालेरमणोपगूढाः ॥ ददर्श काश्चित्प्रमदोपगूढा यथाविहंगाः कुसुमोपगूढाः ॥ २० ॥ अन्याः पुनर्हर्म्यतलोपविष्टा स्तत्र प्रियांकेषु सुखोपविष्टाः ॥ भर्तुःपरा धर्मपरा निविष्टा ददर्श धीमान्मदनोपविष्टाः ॥ २१ ॥ अप्रावृताः कांचनराजिवर्णाः काश्चित्परार्ध्यास्तपनीयवर्णाः ॥ पुनश्च का श्चिच्छशलक्ष्मवर्णाः कांतप्रहीणा रुचिरांगवर्णाः ॥२२॥ ततःप्रियान्प्राप्य मनोभिरामा न्सुप्रीतियुक्ताः सुमनोभिरामाः ॥ गृहेषु हृष्टाः परमाभिरामा हरिप्रवीरः स ददर्श रा माः ॥ २३ ॥ चंद्रप्रकाशाश्च हि वक्रमाला वंक्राक्षिपक्ष्माश्च सुनेत्रमालाः ॥ विभूषणा नां च ददर्श मालाः शतह्रदानामिवचारुमालाः ॥ २४ ॥ नत्वेव सीतांपरमाभिजातां पथिस्थिते राजकुले प्रजाताम् ॥लतां प्रफुल्लामिव साधुजातां ददर्श तन्वीं मनसाभि

---

१ प्रसमीक्ष्य इति पाठः । २ वक्राः सुपक्ष्माश्च इति पाठः ।

जाताम् ॥ २५ ॥ सनातने वर्त्मनि सन्निविष्टां रामेक्षणांतांमदनाभिविष्टाम् ॥ भर्तुर्मनः श्रीमदनुप्रविष्टां स्त्रीभ्यः पराभ्यश्च सदाविशिष्टाम् ॥ २६ ॥ उष्णार्दितांसानुसृतास्त्र कंठीं पुरावराहोंत्तमनिष्ककंठीम् ॥ सुजातपक्ष्मामभिरक्तकंठीं वने प्रवृत्तामिव नीलकंठीम् ॥ २७ ॥ अव्यक्तरेखामिव चंद्रलेखां पांसुप्रदिग्धामिव हेमरेखाम् ॥ क्षतप्ररूढामिव वर्णरेखां वायुप्रभुग्नामिव हेमरेखाम् ॥ २८ ॥ सीतामपश्यन्मनुजेश्वरस्य रामस्य पत्नींवदतांवरस्य ॥ बभूवदुःखोपहतश्चिरस्य प्लवंगमो मंद इवाचिरस्य ॥ २९ ॥ ॥इ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये सुन्दरकांडे पंचमः सर्गः ॥ ५ ॥ ॥ छ ॥ सनिकामंविमानेषुविचरन्कामरूपधृक् ॥ विचचार कपिर्लंकांलाघवेनसमन्वितः ॥ १ ॥ आससादचलक्ष्मीवान्राक्षसेंद्रनिवेशनम् ॥ प्राकारेणार्कवर्णेनभास्वरेणाभिसंवृतम् २ ॥ रक्षितंराक्षसैर्भीमैःसिंहैरिवमहद्वनम् ॥ समीक्ष्यमाणोभवनंचकाशेकपिकुंजरः ॥ ३ ॥ रूप्यकोपहितैश्चित्रैस्तोरणैर्हेमभूषणैः ॥ विचित्राभिश्च कक्ष्याभिर्द्वारैश्च रुचिरावृतम् ॥ ४ ॥ गजास्थितैर्महामात्रैः शूरैश्चविगतश्रमैः ॥ उपस्थितमसंहार्यैर्हयैःस्यंदन

यायिभिः ॥ ५ ॥ सिंहव्याघ्रतनुत्राणैर्दांतकाञ्चनराजतैः ॥ घोषवद्भिर्विचित्रैश्चसदाविच
रितंरथैः ॥६॥ बहुरत्नसमाकीर्णपरार्ध्यासनभूषितम् ॥ महारथसमावापंमहारथमहा
सनम्॥७॥दृश्यैश्चपरमोदारैस्तैस्तैश्चमृगपक्षिभिः॥विविधैर्बहुसाहस्रैःपरिपूर्णसमंततः
॥८॥ विनीतैरंतपालैश्चरक्षोभिश्चसुरक्षितम् ॥ मुख्याभिश्च वरस्त्रीभिःपरिपूर्णसमंततः
॥९॥मुदितप्रमदारत्नंराक्षसेंद्रनिवेशनम्॥वराभरणसंह्रादैःसमुद्रस्वननिस्वनम् ॥१०॥
तद्राजगुणसंपन्नं मुख्यैश्चवरचंदनैः॥ महाजनसमाकीर्णसिंहैरिव महद्वनम् ॥ ११ ॥
भेरीमृदंगाभिरुतं शंखघोषविनादितम् ॥ नित्यार्चितं पर्वहुतंपूजितं राक्षसैः सदा
॥१२॥ समुद्रमिवगंभीरंसमुद्रमिवनिःस्वनम्॥महात्मनोमहद्वेश्ममहारत्नपरिच्छदम्
॥१३॥ महारत्नसमाकीर्णददर्शसमहाकपिः॥ विराजमानंवपुषा गजाश्वरथसंकुलम्॥
॥१४॥ लंकाभरणमित्येवसोमन्यतमहाकपिः ॥ चचारहनुमांस्तत्ररावणस्यसमीपतः
॥१५॥ गृहाद्गृहंराक्षसानामुद्यानानिचसर्वशः॥वीक्षमाणोप्यसंत्रस्तःप्रासादांश्चचचार
सः॥१६॥ अवप्लुत्य महावेगःप्रहस्तस्यविवेशनम् ॥ ततोन्यत्पुप्लुवेवेश्ममहापार्श्वस्य

वीर्यवान् ॥ १७ ॥ अथमेघप्रतीकाशं कुंभकर्णनिवेशनम् ॥ विभीषणस्यचतथाप्रविवेश महाकपिः ॥ १८ ॥ महोदरस्यचतथाविरूपाक्षस्य चैव हि ॥ विद्युज्जिह्वस्यभवनंविद्युन्मालेस्तथैवच ॥ १९ ॥ वद्दुदंष्ट्रस्यचतथा पुप्लुवेसमहाकपिः ॥ शुकस्य च महावेगःसारणस्य च धीमतः ॥ २० ॥ तथा चेंद्रजितो वेश्म जगाम हरियूथपः ॥ जंबुमालेः सुमालेश्च जगाम हरिसत्तमः ॥२१॥ रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैवच ॥ वज्रकायस्य च तथा पुप्लुवे स महाकपिः ॥ २२ ॥ धूम्राक्षस्याथ संपातेर्भवनंमारुतात्मजः ॥ विद्युद्रूपस्य भीमस्य घनस्य विघनस्य च ॥ २३ ॥ शुभनाभस्य चक्रस्य शठस्य कपटस्य च ॥ ह्रस्वकर्णस्य दंष्ट्रस्य लोमशस्यचरक्षसः ॥ २४ ॥ युद्धोन्मत्तस्यमत्तस्यध्वजग्रीवस्यसादिनः ॥ विद्युज्जिह्वद्विजिह्वानां तथाहस्तिमुखस्यच ॥ २५ ॥ करालस्यविशालस्यशोणिताक्षस्य चैव हि ॥ प्लवमानःक्रमेणैवहनूमान्मारुतात्मजः॥ २६ ॥ तेषुतेषु महार्हेषु भवनेषु महायशाः ॥ तेषामृद्धिमतामृद्धिं ददर्श समहाकपिः॥ २७ ॥सर्वेषांसमतिक्रम्यभवनानिसमंततः ॥ आससादाथ लक्ष्मीवान्राक्षसेंद्रनिवेशनम् ॥२८॥

रावणस्योपशायिन्यो ददर्शहरिसत्तमः॥विचरन्हरिशार्दूलो राक्षसीर्विकृतेक्षणाः॥२९॥
शूलमुद्गरहस्ताश्चशक्तितोमरधारिणीः॥ददर्शविविधान्गुल्मांस्तस्यरक्षःपतेर्गृहे॥३०॥
राक्षसांश्च महाकायान्नानाप्रहरणोद्यतान्॥रक्तांश्छ्वेतान्सितांश्चापि हरींश्चापि महाजवा
न्॥३१॥कुलीनान्रूपसंपन्नान्गजान्परगजारुजान् ॥ शिक्षितान्गजाशिक्षायामैरावतस
मान्युधि ॥३२॥ निहंतॄन्परसैन्यानांगृहेतस्मिन्ददर्शसः॥क्षरतश्चयथा मेघान्स्रवतश्चय
थागिरीन्॥३३॥ मेघस्तनितनिर्घोषान्दुर्धर्षान्समरे परैः ॥ सहस्रंवाहिनीस्तत्रजांबूनद
परिष्कृताः ॥३४॥ हेमजालैरविच्छिन्नास्तरुणादित्यसन्निभाः॥ददर्श राक्षसेंद्रस्य राव
णस्य निवेशने॥३५॥शिबिकाविविधाकाराः स कपिर्मारुतात्मजः॥लतागृहाणि चित्रा
णि चित्रशालागृहाणि च ॥३६॥ क्रीडागृहाणिचान्यानि दारुपर्वतकानिच ॥ कामस्य
गृहकं रम्यंदिवागृहकमेवच ॥३७॥ ददर्शराक्षसेंद्रस्यरावणस्यनिवेशने॥समंदरसमप्र
ख्यंमयूरस्थानसंकुलम् ॥३८॥ ध्वजयष्टिभिराकीर्णंददर्शभवनोत्तमम् ॥ अनंतरत्ननि
चयंनिधिजालंसमंततः ॥ धीरनिष्ठितकर्मांगंगृहंभूतपतेरिव॥३९॥अर्चिर्भिश्चापिरत्ना

६

नां तेजसा रावणस्य च ॥ विरराज च तद्वेश्म रश्मिवानिव रश्मिभिः ॥ ४० ॥ जां बूनदमयान्येवशयनान्यासनानिच ॥ भाजनानिचशुभ्राणिददर्शहरियूथपः ॥ ४१ ॥ मध्वासवकृतक्लेदं मणिभाजनसंकुलम् ॥ मनोरममसंबाधंकुबेरभवनं यथा ॥ ४२ ॥ नूपुराणांच घोषेण कांचीनांनिःस्वनेन च ॥ मृदंगतलनिर्घोषैर्घोषवद्भिर्विनादितम् ॥ ४३ ॥ प्रासादसंघातयुतं स्त्रीरत्नशतसंकुलम् ॥ सव्यूढकक्ष्यं हनुमान्प्रविवेश महा गृहम् ॥ ४४ ॥ ॥ इत्यार्षेश्रीमद्रा०वाल्मी०आदिकाव्ये सुं०कांडेषष्ठःसर्गः ॥ ६ ॥ ॥

स वेश्मजालं बलवान्ददर्श व्यासक्तवैदूर्यसुवर्णजालम् ॥ यथामहत्प्रावृषि मेघजालंविद्युद्विनद्धं सविहंगजालम् ॥ १ ॥ निवेशनानां विविधाश्च शालाः प्रधानशंखायुधचापशालाः ॥ मनोहराश्चापि पुनर्विशाला ददर्श वेश्माद्रिषु चंद्रशालाः ॥ २ ॥ गृहाणि नानावसुराजितानि देवासुरैश्चापि सुपूजितानि ॥ सर्वैश्च दोषैःपरिवर्जितानि कपिर्ददर्श स्वबलार्जितानि ॥ ३ ॥ तानि प्रयत्नाभिसमाहितानिमयेनसाक्षादिवनिर्मितानि ॥ महीतलेसर्वगुणोत्तराणि ददर्श लंकाधिपतेर्गृहाणि ॥ ४ ॥ ततोददर्शोच्छ्रितमेघरूपं मनोहरं कां

चनचारुरूपम् ॥ रक्षोधिपस्यात्मबलानुरूपं गृहोत्तमं ह्यप्रतिरूपरूपम् ॥ ५ ॥ म
हीतले स्वर्गमिव प्रकीर्णं श्रिया ज्वलंतं बहुरत्नकीर्णम् ॥ नानातरूणां कुसुमावकीर्णं
गिरेरिवाग्रं रजसावकीर्णम् ॥ ६ ॥ नारीप्रवेकैरिव दीप्यमानं तडिद्भिरंभोदवदर्च्यमान
म् ॥ हंसप्रवेकैरिव वाह्यमानं श्रियायुतं खे सुकृतं विमानम् ॥ ७ ॥ यथा नगाग्रं बहु
धातुचित्रं यथा नभश्च ग्रहचंद्रचित्रम् ॥ ददर्श युक्तीकृतचारुमेघचित्रं विमानं बहुरत्न
चित्रम्॥८॥ मही कृता पर्वतराजिपूर्णा शैलाः कृता वृक्षवितानपूर्णाः ॥ वृक्षाः कृताःपुष्प
वितानपूर्णाः पुष्पं कृतं केसरपत्रपूर्णम् ॥ ९ ॥ कृतानि वेश्मानिच पांडुराणि तथा सु
पुष्पा अपि पुष्करिण्यः ॥ पुनश्च पद्मानि सकेसराणि वनानि चित्राणि सरोवराणि ॥
॥ १० ॥ पुष्पाह्वयं नाम विराजमानं रत्नप्रभाभिश्च विघूर्णमानम् ॥ वेश्मोत्तमानामपि
चोच्चमानं महाकपिस्तत्रमहाविमानम् ॥ ११ ॥ कृताश्च वैडूर्यमयाविहंगा रूप्यप्रवालै
श्च तथा विहंगाः ॥ चित्राश्च नानावसुभिर्भुजंगा जात्यानुरूपास्तुरगाः शुभांगाः॥१२॥
प्रवालजांबूनदपुष्पपक्षाः सलीलमावर्जितजिह्मपक्षाः ॥ कामस्य साक्षादिवभांतिपक्षाः

कृता विहंगाः सुमुखाः सुपक्षाः ॥ १३ ॥ नियुज्यमानाश्चगजाःसुहस्ताःसकेसराश्चोत्प
लपत्रहस्ताः ॥ बभूव देवी च कृता सुहस्ता लक्ष्मीस्तथापद्मिनिपद्महस्ता ॥ १४॥ इती
व तद्गृहमभिगम्यशोभमानं सविस्मयोनगमिवचारुकंदरम् ॥ पुनश्च तत्परमसुगंधिसुं
दरं हिमात्यये नगमिव चारुकंदरम् ॥ १५ ॥ ततःसतां कपिरभिपत्य पूजितां चरन्पुरीं
दशमुखबाहुपालिताम् ॥ अदृश्यतांजनकसुतां सुपूजितां सुदुःखितःपतिगुणवेगनिर्जि
ताम्॥१६॥ ततस्तदा बहुविधभावितात्मनःकृतात्मनो जनकसुतां सुवर्त्मनः ॥ अप
श्यतोऽभवदतिदुःखितं मनः सुचक्षुषः प्रविचरतो महात्मनः ॥ १७॥ ॥ इत्यार्षेश्रीम
द्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे सप्तमः सर्गः ॥ ७ ॥ ॥ ॥ ॥

स तस्य मध्ये भवनस्य संस्थितो महद्विमानंमणिरत्नचित्रितम् ॥ प्रतप्तजांबूनदजाल
कृत्रिमं ददर्श धीमान्पवनात्मजःकपिः ॥ १ ॥ तदप्रमेयाप्रतिकारकृत्रिमं कृतं स्वयंसा
ध्वितिविश्वकर्मणा ॥ दिवंगतेवायुपथेप्रतिष्ठितं व्यराजतादित्यपथस्यलक्ष्मतत् ॥ २ ॥
न तत्र किंचिन्न कृतं प्रयत्नतो न तत्र किंचिन्न महार्घरत्नवत् ॥ न ते विशेषा नियताःसु

रेष्वपि न तत्रकिंचिन्न महाविशेषवत् ॥ ३ ॥ तपःसमाधानपराक्रमार्जितं मनःसमाधान
विचारचारणम् ॥ अनेकसंस्थानविशेषनिर्मितं ततस्ततस्तुल्यविशेषदर्शनम् ॥ ४ ॥ म
नःसमाधायतुशीघ्रगामिनंदुरासदंमारुततुल्यगामिनम् ॥ महात्मनांपुण्यकृतांमह
र्द्धिनां यशस्विनामग्र्यमुदामिवालयम् ॥ ५ ॥ विशेषमालंब्य विशेषसंस्थितं विचित्र
कूटं बहुकूटमंडितम् ॥ मनोभिरामं शरदिंदुनिर्मलं विचित्रकूटंशिखरं गिरेर्यथा ॥ ६ ॥ व
हन्तियत्कुडण्लशोभिताननामहाशनाव्योमचरा निशाचराः ॥ विवृत्तविध्वस्तविशाल
लोचना महाजवा भूतगणाः सहस्रशः ॥ ७ ॥ वंसतपुष्पोत्करचारुदर्शनं वसंतमासाद
पिचारुदर्शनम् ॥ सपुष्पकंतत्रविमानमुत्तमंददर्शतद्वानरवीरसत्तमः ॥ ८ ॥ ॥ इत्या
र्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुंदरकांडे अष्टमःसर्गः ॥ ८ ॥ ॥ ॥
तस्यालयवरिष्ठस्य मध्येविमलमायतम् ॥ ददर्श भवनश्रेष्ठं हनूमान्मारुतात्मजः ॥ १ ॥
अर्धयोजनविस्तीर्णमायतंयोजनंमहत् ॥ भवनं राक्षसेंद्रस्यबहुप्रासादसंकुलम् ॥ २ ॥

---

१ दुरावरं इति पाठः । शत्रुभिर्दुर्निवार्गमित्यर्थः ।

मार्गमाणस्तुवैदेहींसीतामायतलोचनाम् ॥ सर्वतः परिचक्रामहनूमानरिसूदनः ॥३॥ उत्तमं राक्षसावासं हनूमानवलोकयन् ॥ आससादाथ लक्ष्मीवान्राक्षसेंद्रानिवेशनम्॥ ॥ ४ ॥ चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च ॥ परिक्षिप्तमसंबाधं रक्ष्यमाणमुदायुधैः ॥ ५ ॥ राक्षसीभिश्चपत्नीभीरावणस्य निवेशनम् ॥ आहृताभिश्च विक्रम्य राजकन्या भिरावृतम् ॥६॥ तन्नक्रमकराकीर्णं तिमिंगिलझषाकुलम् ॥ वायुवेगसमाधूतं पन्नगैरि व सागरम् ॥ ७ ॥ या हिवैश्रवणेलक्ष्मीर्याचंद्रे हरिवाहने ॥सा रावणगृहे रम्या नित्य मेवानपायिनी ॥ ८ या च राज्ञः कुबेरस्य यमस्य वरुणस्यच ॥ तादृशी तद्विशिष्टावा ऋद्धी रक्षोगृहेष्विह॥९॥तस्य हर्म्यस्य मध्यस्थं वेश्म[1] चान्यत्सुनिर्मितम् ॥ बहुनिर्यूह संयुक्तंददर्शपवनात्मजः॥१०॥ब्रह्मणोऽर्थेकृतंदिव्यंदिवियद्विश्वकर्मणा॥ विमानंपुष्प कंनामसर्वरत्नविभूषितम् ॥११ ॥ परेणतपसालेभेयत्कुबेरः पितामहात् ॥ कुबेरमोज सा जित्वालेभेतद्राक्षसेश्वरः ॥ १२ ॥ ईहामृगसमायुक्तैःकार्तस्वरविभूषितैः ॥ सुकृतै

१ सस्त्रीकशयनगृहमिति कतकः । वेश्म पुष्पकाख्यामिति तीर्थः ।

राजितं स्तम्भैःप्रदीप्तमिवच श्रिया ॥ १३ ॥ मेरुमंदरसंकाशैरुल्लिखद्भिरिवाम्बरम् ॥
कूटागारैःशुभागारैःसर्वतःसमलंकृतम्॥१४॥ज्वलनार्कप्रतीकाशैःसुकृतंविश्वकर्मणा।
हेमसोपानयुक्तंचचारुप्रवरवेदिकम् ॥१५॥ जालवातायनैर्युक्तंकाञ्चनैःस्फाटिकैरपि॥
इंद्रनीलमहानीलमणिप्रवरवेदिकम् ॥ १६ ॥ विद्रुमेणविचित्रेणमणिभिश्च महाधनैः ॥
निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम् ॥ १७॥ चन्दनेच रक्तेन तपनीयनिभे
नच ॥सुपुण्यगंधिनायुक्तमादित्यतरुणोपमम् ॥ १८॥ विमानंपुष्पकंदिव्यमारुरोहम
हाकपिः॥तत्रस्थःसर्वतो गंधं पानभक्ष्यान्नसंभवम् ॥ १९ ॥ दिव्यं संमूर्छितं जिघ्रन्रूपवं
तमिवानिलम्॥सगंधस्तं महासत्त्वं बंधुर्बंधुमिवोत्तमम्॥ २० ॥ इत एहीत्युवाचेव तत्र
यत्र स रावणः॥ततस्तां प्रस्थितःशालां ददर्श महतीं शिवाम्॥२१॥रावणस्य महाकांतां
कांतामिव वरस्त्रियम्॥ मणिसोपानविकृतां हेमजालविराजिताम् ॥ २२ ॥ स्फाटिकै
रावृततलां दंतांतरितरूपिकाम् ॥ मुक्तावज्रप्रवालैश्च रूप्यचामीकरैरपि ॥ २३ ॥ वि

१ गुप्तस्वल्पगृहैः । २ विहारयोग्यगृहैः ।

भूषितां मणिस्तंभैः सुबहुस्तंभभूषिताम्॥समैर्ऋजुभिरत्युच्चैः समंतात्सुविभूषितैः॥
॥२४॥स्तंभैःपक्षैरिवात्युच्चैर्दिवं संप्रस्थितामिव॥महत्या कुथयास्तीर्णां पृथिवीलक्षणां
कया ॥ २५ ॥ पृथिवीमिवविस्तीर्णां सराष्ट्रगृहशालिनीम् ॥ नादितांमत्तविहगैर्दिव्य
गंधाधिवासिताम् ॥ २६ ॥परार्ध्यास्तरणोपेतां रक्षोधिपनिषेविताम् ॥धूम्रामगुरुधूपेन
विमलां हंसपाण्डुराम्॥२७॥पत्रपुष्पोपहारेणकल्माषीमिव सुप्रभाम्॥मनसो मोदजन
नीं वर्णस्यापि प्रसाधिनीम्॥२८॥तांशोकनाशिनीं दिव्यां श्रियःसंजननीमिव॥ इंद्रिया
णींद्रियार्थैस्तु पंच पंचभिरुत्तमैः॥ २९ ॥ तर्पयामास मातेव तदा रावणपालिता ॥ स्व
र्गोयं देवलोकोयमिंद्रस्यापि पुरीभवेत्॥ ३० ॥ सिद्धिर्वेयंपराहि स्यादित्यमन्यतमारु
तिः॥ ३१ ॥प्रध्यायतइवापश्यत्प्रदीपांस्तत्रकांचनान्॥ धूर्तानिवमहाधूर्तैर्देवनेनपरा
जितान् ॥ ३२ ॥ दीपानां च प्रकाशेन तेजसा रावणस्य च ॥ अर्चिर्भिर्भूषणानांच प्र

---

१ विशालविचित्रकंबलास्तरणेन । २ कल्माषी शबलवर्णा वसिष्ठगौः । अनेन सर्वानंदप्रापयित्वं रिपूणामधृष्यत्वं सर्वमनोरथपूरकत्वं च सूच्यते । ३ स्वर्गोज्योतिष्टोमादिकफलभोगभूमिः । ४ देवलोकोवायुवरुणादिलोकः । ५ इंद्रस्य पुरीअमरावती इति पृथक्पृथग्विवेकः ।

